There are four stages of a Brahmana's life (1) ब्रह्मचर्य, or the period of celebacy, in which he should acquire learning by living at his Guru's house; (2) गार्हस्थ्य or the married life in which he should live like a गृहस्थ (house-holder); (3) वानप्रस्थ or the life of an anchorite in which he should betake himself to the forest with or without his wife; (4) संन्यास or the last stage in which he should fix his mind on मोक्ष।

10. द्वितीयम् आश्रमम्—the second stage, *viz.*, the householder's life.

11. संक्रमितुम्—प्रवेष्टुम्, to enter, सम्+क्रम्+तुमुन्।

12. अयं कालः—this is the time.

कुशलप्रश्नं विधायागमनप्रयोजनप्रश्नं चिकीर्षुराह—

तवार्हतो नाभिगमेन तृप्तं
मनो नियोगक्रिययोत्सुकं मे।
अप्याज्ञया शासितुरात्मना वा
प्राप्तोऽसि सम्भावयितुं वनान्माम् ॥ ११ ॥

सञ्जी०। अर्हतः पूज्यस्य प्रशस्तस्य "अर्हः प्रशंसायाम्" इति शतृप्रत्ययः। तवाभिगमेनागमनमात्रेण मे मनो न तृप्तं न तुष्टम्। किंतु नियोगक्रिययाऽऽज्ञाकरणेनोत्सुकं सोत्कण्ठम् 'इष्टार्थोद्युक्त उत्सुकः' इत्यमरः। "प्रसितोत्सुकाभ्यां तृतीया च" इति सप्तम्यर्थे तृतीया। शासितुर्गुरोराज्ञयाऽऽप्यात्मना स्वतो वा "प्रकृत्यादिभ्य

time for you to enter into the second stage of life, which is capable of doing good to all the rest.

Purport in Sanskrit :—भवद्गुरुः यथावत्त्वां वेदम् अध्याप्य प्रसन्नेन मनसा ' गृहस्थाश्रमं प्रविश ' इति भवन्तम् अनुज्ञातवान् किम् । निस्सन्देहम् अधुना कालोऽयं यद्भवान् गृहस्थाश्रमं प्रविशेत् ।

Change of Voice :—त्वां प्रसन्नः महर्षिः सम्यग् विनीय गृहाय अनुमतवान् अपि ? हि ते सर्वोपकारक्षमं द्वितीयम् आश्रमं संक्रमितुम् अनेन कालेन ( भूयते )

## Notes

1. प्रसन्नेन—तुष्टेन, pleased, delighted, प्र+सद्+क्त ।
2. महर्षिणा—by the great sage.
3. सम्यक्—fully, well, it is an indeclinable (अव्यय) ।
4. विनीय—शिक्षयित्वा, having taught, वि+नी+ल्यप् ।
5. गृहाय—गृहस्थाश्रमं प्रवेष्टुम्, to enter the life of a house-holder.
6. अनुमतः अपि—आज्ञप्तः किम्, have you been permitted ? अनुमत—अनु+मन्+क्त ।
7. हि – यस्मात्, because
8. ते—तव, your.
9. सर्वोपकारक्षमम्—सर्वेषाम् उपकारे क्षमम् ( समर्थम् ) that which is able to benefit all. It is the गृहस्थाश्रम only which can oblige all other आश्रमs, by benefitting them by means of giving charities. Mallinatha quotes Manu :—यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः । वर्तन्ते गृहिणस्तद्वदाश्रित्येतर आश्रमाः ।

उपसंख्यानम्" इति तृतीया। मां सम्भावयितुं वनात्प्राप्तोऽसि गुर्वर्थे स्वार्थे वाऽऽगमनमित्यर्थः।

**Prose Order** :—अर्हतः तव अभिगमेन मे मनः न तृप्तं, (किन्तु) नियोगक्रियया उत्सुकम् (अस्ति); शासितुः आज्ञया अपि आत्मना वा मां सम्भावयितुं (त्वं) वनात् प्राप्तोऽसि।

**Hindi Translation** :—आप (मेरे) पूज्य हैं; आप के आगमन मात्रही से मेरा मन प्रसन्न नहीं है; (वह तो) आप की आज्ञा सम्पादन करने के लिये उत्सुक है। क्या आप (अपने) गुरु की आज्ञा से, या अपने ही मन से, मुझे कृतार्थ करने के लिए वन से आये हैं?

**English Translation** :—My mind is not pleased by the (mere) coming of you who are worthy of honour; it is anxious to carry out some order of (yours); is it by your preceptor's order or of your own accord that you have come from the forest to favour me ?

**Purport in Sanskrit** :—मम परमपूज्यो भवान्, अतः भवतः आगमनमात्रेणैव मुदं लब्धुं न शक्नोमि, मम चेतः कामपि भवतः आज्ञां सम्पादयितुम् अतीव समुत्सुकं वर्तते। अपरं च मे कथयत्वार्यः—गुरोराज्ञया स्वेच्छया वा मह्यं दर्शनं दातुं भवानत्र समागतः इति।

**Change of Voice** :—अर्हतः तव अभिगमेन मे मनसा तृप्तेन न (भूयते), किन्तु नियोगक्रियया उत्सुकेन (भूयते), शासितुः आज्ञया अपि आत्मना वा मां सम्भावयितुं वनात् प्राप्तेन (भूयते)।

of worship, he became disappointed in respect of the accomplishment of his purpose, and addressed him thus.

Purport in Sanskrit :—यदा कौत्सः मृन्मयम् अर्घ्यपात्रं दृष्टवान् तदाऽसौ अनुमितवान् यद् रघोः पार्श्वे किमपि द्रव्यं न वर्तते, अनेन सकला सम्पत्तिः दक्षिणात्वेन दत्ता; अतएव यद्यपि रघुरतीव उदाराणि वचनानि उवाच तथापि तस्य वचनैः कौत्सस्य हृदये हर्षो नाभूत् यतोऽसौ अनुमानेन ज्ञातवान् यन्नायं मम प्रयोजनं साधयितुं शक्तः। एवं मनसि विचार्य स रघोः प्रश्नानामुत्तरम् अनया रीत्या दातुं प्रचक्रमे।

Change of Voice :—अर्घ्यपात्रानुमितव्ययस्य रघोः इति उदाराम् अपि गां निशम्य वरतन्तुशिष्येण स्वार्थोपपत्तिं प्रति दुर्बलाशेन ( सता ) सः इति ओच्यत।

## Notes

1. अर्घ्यपात्रानुमितव्ययस्य—(1) अर्घ्य means पूजासामग्री, materials of worship. (2) अनुमित—inferred (3) व्यय—सर्वस्वत्यागः expenditure of his entire wealth.
   (1) अर्घ्यस्य पात्रम् इति अर्घ्यपात्रम् ( ष० त० ), the pot that contained the worship-materials.
   (2) अर्घ्यपात्रेण अनुमितः व्ययः ( सर्वस्वत्यागः ) यस्य सः (बहु०), he whose expenditure of the entire wealth was (at once) inferred from the pot that contained the materials of worship.
2. इति—उक्तप्रकाराम्, above-mentioned.
3. उदाराम्—औदार्ययुक्ताम्, noble.

इत्यर्घ्यपात्रानुमितव्ययस्य
रघोरुदारामपि गां निशम्य ।
स्वार्थोपपत्तिं प्रति दुर्बलाश-
स्तमित्यवोचद्वरतन्तुशिष्यः ॥ १२ ॥

सञ्जी० । अर्घ्यपात्रेण मृन्मयेनानुमितो व्ययः सर्वस्वत्यागो यस्य तस्य रघोरित्युक्तप्रकारामुदारामौदार्ययुक्तामपि गां वाचम् 'मनो नियोगक्रिययोत्सुकं मे' इत्येवंरूपाम् । 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्याः स्त्रियां पुंसि गौः' इत्यमरः । निशम्य श्रुत्वा वरतंतुशिष्यः कौत्सः स्वार्थोपपत्तिं स्वकार्यसिद्धिं प्रति दुर्बलाशः सन्मृन्मयपात्रदर्शनाच्छिथिलमनोरथः संस्तं रघुमिति वक्ष्यमाणप्रकारेणावोचत् ।

Prose Order :—अर्घ्यपात्रानुमितव्ययस्य रघोः इति उदाराम् अपि गां निशम्य वरतन्तुशिष्यः स्वार्थोपपत्तिं प्रति दुर्बलाशः ( सन् ) तम् इति अवोचत् ।

Hindi Translation :—जिस पात्र में पूजा की सामग्री रख कर रघु आए उसी से (कौत्स ने) अनुमान कर लिया कि रघु अपनी सारी सम्पत्ति दान कर चुका है; इसलिए, यद्यपि रघु की बातें (बड़ी) उदार थीं तथापि उन्हें सुनकर कौत्स को अपने प्रयोजन की पूर्ति में निराशा हो गई और वह (कौत्स) इस प्रकार बोला ।

glish Translation :—Although the disciple of Varatantu heard the noble speech of *Raghu*, whose expenditure of his entire wealth was inferred from the pot that contained the materials

of worship, he became disappointed in respect of the accomplishment of his purpose, and addressed him thus.

Purport in Sanskrit :—यदा कौत्सः मृन्मयम् अर्घ्यपात्रं दृष्टवान् तदाऽसौ अनुमितवान् यद् रघोः पार्श्वे किमपि द्रव्यं न वर्तते, अनेन सकला सम्पत्तिः दक्षिणात्वेन दत्ता ; अतएव यद्यपि रघुरतीव उदाराणि वचनानि उवाच तथापि तस्य वचनैः कौत्सस्य हृदये हर्षो नाभूत् यतोऽसौ अनुमानेन ज्ञातवान् यन्नायं मम प्रयोजनं साधयितुं शक्तः । एवं मनसि विचार्य स रघोः प्रश्नानामुत्तरम् अनया रीत्या दातुं प्रचक्रमे ।

Change of Voice :—अर्घ्यपात्रानुमितव्ययस्य रघोः इति उदाराम् अपि गां निशम्य वरतन्तुशिष्येण स्वार्थोपपत्तिं प्रति दुर्बलाशेन ( सता ) सः इति औच्यत ।

## Notes

1. अर्घ्यपात्रानुमितव्ययस्य—(1) अर्घ्य means पूजासामग्री, materials of worship. (2) अनुमित—inferred (3) व्यय—सर्वस्वत्यागः expenditure of his entire wealth.
(1) अर्घ्यस्य पात्रम् इति अर्घ्यपात्रम् ( ष० त० ), the pot that contained the worship-materials.
(2) अर्घ्यपात्रेण अनुमितः व्ययः ( सर्वस्वत्यागः ) यस्य सः (बहु०), he whose expenditure of the entire wealth was (at once) inferred from the pot that contained the materials of worship.
2. इति—उक्तप्रकाराम्, above-mentioned.
3. उदाराम्—औदार्ययुक्ताम्, noble.

4. अपि—*this word is used here in the sense of* 'disregard', *i.e.*, though Kautsa heard the noble words of Raghu, he did not attach much importance to them. He was rather guided in his judgment of the emperor by the latter's visible signs of poverty.

5. गाम्—वाचम्. speech, words; Mallinatha quotes अमर on गो—स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले (लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः)।

6. निशम्य—श्रुत्वा, having heard.

7. वरतन्तुशिष्यः —वरतन्तोः शिष्यः (ष० त०), *the disciple* of Varatantu, *i.e.*, Kautsa.

8. स्वार्थोपपत्तिं प्रति—towards or with respect to the attainment of his object.

स्वस्य अर्थः (प्रयोजनम्) इति स्वार्थः (ष० त०), his purpose, स्वार्थस्य उपपत्तिः (सिद्धिः, success, attainment) इति स्वार्थोपपत्तिः ताम् (ष० त०), उपपत्ति—उप+पद्+क्तिन्।

9. दुर्बलाशः —दुर्बला आशा यस्य सः दुर्बलाशः (बहु०), he whose hopes became feeble; *i. e.*, becoming disappointed

10. तम्—रघुम्, to Raghu.

11. इति— in the following way.

12. अवोचत्—*spoke.*

सर्वत्र नो वार्तमवेहि राजन्
नाथे कुतस्त्वय्यशुभं प्रजानाम् ।
सूर्ये तपत्यावरणाय दृष्टेः
कल्पेत लोकस्य कथं तमिस्रा ॥ १३ ॥

सञ्जी० । हे राजन् ! त्वं सर्वत्र नोऽस्माकं वार्तं स्वास्थ्यमवेहि जानीहि 'वार्तं फल्गुन्यरोगे च' इत्यमरः । 'वार्तं पाटवमारोग्यं भव्यं स्वास्थ्यमनामयम्' इति यादवः । न चैतदाश्चर्यमित्याह—नाथ इति । त्वयि नाथ ईश्वरे सति प्रजानामशुभं दुःखं कुतः । तथाहि अर्थान्तरं न्यस्यति—सूर्य इत्यादिना । सूर्ये तपति प्रकाशमाने सति तमिस्रा तमस्ततिः । 'तमिस्रं तिमिरं रोगे तमिस्रा तु तमस्ततौ । कृष्णपक्षनिशायां च' इति विश्वः । 'तमिस्रम्' इति पाठे तमिस्रं तिमिरम् 'तमिस्रं तिमिरं तमः' इत्यमरः । लोकस्य जनस्य लोकस्तु भुवने जने' इत्यमरः । दृष्टेरावरणाय कथं कल्पेत दृष्टिमावरितुं नालमित्यर्थः । क्लृपेरलमर्थत्वात्तद्योगे "नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च" इत्यनेन चतुर्थी । 'अलमिति पर्याप्त्यर्थग्रहणम्' इति भगवान्भाष्यकारः । कल्पेत संपद्येतेत्यर्थः । क्लृपि संपद्यमाने चतुर्थीति वक्तव्यात् ।

Prose Order :—( हे ) राजन् ! सर्वत्र नः वार्तम् अवेहि ; त्वयि नाथे प्रजानाम् अशुभं कुतः । सूर्ये तपति ( सति ) तमिस्रा लोकस्य दृष्टेः आवरणाय कथं कल्पेत ।

Hindi Translation :—हे राजन् ! हमारे यहाँ सब कुशल जानिए । जब आप ही राजा हैं, (भला) तब प्रजा को कैसे कष्ट हो सकता है ? सूर्य के प्रकाशमान रहते रहते, अँधेरी रात लोगों की दृष्टि को कैसे रोक सकती है ?

English Translation :—Know, O king, it is all well with us in all respects. How can troul

befall the subjects while you are king? How can the dark night obstruct the sight of men while the sun is shining?

**Purport in Sanskrit** :—हे राजन् वयं सर्वप्रकारैः सुखिनः। यदा भवन्तः एव अस्माकं त्रातारः सन्ति तदा कथमस्माकं दुःखं भवितुं शक्नोति। सूर्ये प्रकाशमाने सति कथमन्धकारः लोके स्थातुं शक्नोति।

**Change of Voice** :—हे राजन्! ( त्वया ) नः सर्वत्र वार्तम् अवेयताम्। त्वयि नाथे (सति) प्रजानाम् अशुभेन कुतः भूयते। सूर्ये तपति सति तमिस्रया लोकस्य दृष्टेः आवरणाय कथं कल्प्येत।

## Notes.

1. नः— अस्माकम्।
2. वार्तम्—स्वास्थ्यम्, कल्याणम्, कुशलम्, welfare; वार्तं पाटवमारोग्यं भव्यं स्वास्थ्यमनामयम्—इति यादवः।
3. अवेहि—जानीहि, know.
4. त्वयि नाथे ( सति )—भवति नृपे विद्यमाने, when you are (our) king; भावे सप्तमी।
5. प्रजानाम्—प्रकृतीनाम्, of the subjects.
6. अशुभम्—अमङ्गलम्, evil.
7. कुतः—how, whence.
8. प्रजानाम् अशुभम् कुतः—how can evil befall the subjects?

9. सूर्ये तपति ( सति )—रवौ प्रकाशमाने, while the sun is shining.

10. तमिस्रा—तमस्तातिः, *i. e.*, a dark night or a mass of darkness : तमो बाहुल्यम् अस्ति अस्याम् इति तमिस्रा। तमिस्रं तिमिरं रोगे तमिस्रा तु तमस्ततौ। कृष्णपक्षनिशायां च—इति विश्वः।

11. लोकस्य—जनस्य, जातौ एकवचनम्, it may be translated as 'of people': लोकस्तु भुवने जने इत्यमरः।

12. दृष्टेः—नेत्रस्य।

13. आवरणाय—आच्छादनाय, for obstructing 'नमः स्वस्ति स्वाहास्वधाऽलंवषड्योगाच्च इति चतुर्थी— the root कल्पेत has the sense of अलम्।

14. कथं कल्पेत—केन प्रकारेण अलम्, शकम्, how is it able? अर्थात् न अलम्, the idea is that a dark night is not able to obstruct the sight of men while the bright sun is shining in the sky.

'तवार्हतः—' इत्यादिनोक्तं यत्तत्र चित्रमित्याह—

भक्तिः प्रतीक्ष्येषु कुलोचिता ते
पूर्वान्महाभाग तयाऽतिशेषे।
व्यतीतकालस्त्वहमभ्युपेत-
स्त्वामर्थिभावादितिमे विषादः॥ १४॥

सञ्जी०। प्रतीक्ष्येषु पूज्येषु 'पूज्यः प्रतीक्ष्यः' इत्यमरः। भक्तिरनुरागविशेषस्ते तव कुलोचिता कुलाभ्यस्ता 'अभ्यस्तेऽप्युचितं न्याय्यम्' इति यादवः। हे महाभाग सार्वभौम! तया भक्त्या पूर्वानतिशेषेऽतिवर्तसे। किंतु सर्वत्र धार्ते चेत्तर्हि कथं खेदखिन्न इव

दृश्यसेऽत आह–व्यतीतेति । अहं व्यतीतकालोऽतिक्रान्तकालः सन्नर्थिभावात्त्वामभ्युपेत इति मे मम विषादः ।

**Prose Order** :—प्रतीक्ष्येषु भक्तिः ते कुलोचिता । (हे) महाभाग तया (त्वं) पूर्वान् अतिशेषे । तु (*i.e.*, किन्तु) अहं व्यतीतकालः (सन्) अर्थिभावात् त्वाम् अभ्युपेतः इति मे विषादः (अस्ति) ।

**Hindi Translation** :—पूजनीय पुरुषों में भक्ति करना तो आप के कुल की रीति ही है। हे महाभाग, उसमें तो आप अपने पूर्वजों से भी बढ़ गए । परन्तु मुझे शोक इस बात का है कि मैं याचक बनकर कुसमय आप के पास आया ।

**English Translation** :—Devotion towards the honourable is a practice with your race; O illustrious one, you have surpassed (even) your ancestors in that. But I am sorry that I came to you as a needy person when the proper time has passed away.

**Purport in Sanskrit** :—पूज्यानां सम्मानकरणम् तव कुलरीतिरेव, हे महाभाग, सम्मानकरणे तु त्वं स्वपूर्वपुरुषान् अति वृत्तवान् असि । यदहम् गुरुदक्षिणायै धनं याचितुं कुसमये त्वाम् उपस्थितः स एव मम खेदः ।

**Change of Voice** :—प्रतीक्ष्येषु भक्त्या ते कुलोचितया (भूयते) हे महाभाग, तया ( त्वया ) पूर्वे अतिशय्यन्ते । तु मया व्यतीतकालेन ( सता ) अर्थिभावात् त्वाम् अभ्युपेतेन (भूयते) इति मे विषादेन भूयते ।

## Notes.

1. प्रतीक्ष्येषु—पूज्येषु, in the adorable, towards the honourable.

2. भक्तिः—अनुरागविशेषः, reverence, attention, devotion ; भज् + क्तिन् ।
3. ते—तव, your.
4. कुलोचिता—कुलस्य उचिता (अभ्यस्ता)—(ष० त०), customary with (your) family ; practice of (your) race ; अन्वयक्रमागतं स्वाम्यम् इत्यर्थः ।
5. हे महाभाग—Mallinatha translates this by भाग्यशील (महान् भागः अर्थात् भाग्यं यस्य सः) ; this, however, also means—O illustrious one, O glorious one.
6. तया—भक्त्या, in that *i.e.*, in matter of showing reverence.
7. पूर्वान्—पूर्वजान्, पूर्वपुरुषान्, ancestors.
8. अतिशेषे—अतिवर्तसे you excel, you surpass.
9. तु—किन्तु, but.
10. अहम्—I
11. व्यतीतकालः—व्यतीतः कालः यस्य सः (बहु०), one by whom time has been lost, *i.e.*, one who has missed the proper time and has come late.
12. अर्थिभावात्—अर्थी means याचक, needy अर्थिनः भावः इति अर्थिभावः (ष० त०) तस्मात्, in the condition of a needy person ; in the capacity of a suitor.
13. त्वाम्—तव सकाशम्, to you ; near you.
14. अभ्युपेतः—आगतः, have come, अभि+उप+इ+क्त ।
15. इति—therefore.
16. विषादः—खेदः sorrow, regret.

शरीरमात्रेण नरेन्द्र तिष्ठन्
आभासि तीर्थप्रतिपादितर्द्धिः ।
आरण्यकोपात्तफलप्रसूतिः
स्तम्बेन नीवार इवावशिष्टः ॥ १५ ॥

सञ्जी० । हे नरेन्द्र ! तीर्थे सत्पात्रे प्रतिपादिता दत्तर्धि
तथोक्तः । 'योनौ जलावतारे च मन्त्र्याद्यष्टादशस्वपि । पुण्यक्षे
पात्रे तीर्थं स्याद्दर्शनेष्वपि ॥' इति हलायुधः । शरीरमात्रेण ति
आरण्यका अरण्ये भवा मनुष्या मनुप्रमुखाः " अरण्यान्मनु
इति वुञ्प्रत्ययः । तैरुपात्ता फलमेव प्रसूतिर्यस्य स स्तम्बेन क
नावशिष्टः प्रकृत्यादित्वात्तृतीया । नीवार इव आभासि शोभसे ।

Prose Order :—( हे ) नरेन्द्र ! तीर्थप्रतिपादितर्द्धिः (
शरीरमात्रेण तिष्ठन् आरण्यकोपात्तफलप्रसूतिः स्त
अवशिष्टः नीवार इव आभासि ।

Hindi Translation :—हे राजन् ! आपने अपनी ( सा
सम्पत्ति सत्पात्रों को दान दे दी, ( अब ) आपका शरीर
अवशिष्ट रह गया । जब वनवासी लोग नीवार के फल
धान्य तोड़ ले जाते हैं तब उसके पौधे में केवल डंठल
शेष रह जाता है । आप ठीक ऐसे नीवार के पौधे की त
सुशोभित हो रहे हैं ।

English Translation :—O king, having given
your wealth to deserving persons, you appear w
your body alone remaining to you, like a *niva*
plant, of which the corn has been taken away b
foresters ; and of which the stalk alone remai
to it.

Purport in Sanskrit :—हे राजेन्द्र ! भवता अखिला सम्पत्तिः सत्पात्रेभ्यः दत्ता, न किमप्यधुना तव सकाशे विद्यते; सम्प्रति भवतः शरीरमेव केवलमवशिष्टम् । यदा वनवासिनः नीवारश्यामाकादीनां धान्यं लुनन्ति तदा तेषां वृक्षेषु केवलं वृन्तमेव अवशिष्यते : भवानपि इदानीं तादृशो धान्यरहित-नीवारवृक्ष इव शोभसे।

Change of Voice :—हे नरेन्द्र तीर्थप्रतिपादितर्द्धिना ( त्वया) शरीरमात्रेण तिष्ठता ( सता ) आरण्यकोपात्तफलप्रसूतिना स्तम्बेन अवशिष्टेन नीवारेण इव आभायते।

## Notes.

1. नरेन्द्र—नराणाम् इन्द्रः इति नरेन्द्रः, ( ष० त० ), तत्सम्बुद्धौ हे नरेन्द्र, O lord of men.
2. तीर्थप्रतिपादितर्द्धिः—तीर्थ means सत्पात्र deserving recipients ; प्रतिपादित—दत्त, given, प्रति+पद्+णिच्+क ; ऋद्धि—सम्पत्ति wealth ; तीर्थे ( सत्पात्रे ) प्रतिपादिता ( दत्ता ) ऋद्धिः ( सम्पत्तिः ) येन सः ( बहु० ), one who has given away his whole wealth to deserving recipients.
3. शरीरमात्रेण—शरीरमेव इति शरीरमात्रम् ( मयूरव्यंसकादित्वात्समासः ), तेन शरीरमात्रेण, in (by) mere body.
4. तिष्ठन्—विद्यमानः, existing, स्था+शतृ ।
5. आरण्यकोपात्तफलप्रसूतिः —आरण्यक means forest-dwellers or forest-dwelling ascetics ; उपात्त—गृहीत, taken, उप+आ+दा+क ; फलम् एव प्रसूतिः (produce) इति फलप्रसूतिः ( रूपककर्मधारय ), प्रसूति=प्र+सू+क्तिन् ।

(1) आरण्यकैः उपात्ता इति आरण्यकोपात्ता ( तृ० त० ) अरण्यनिवासि-गृहीता ।

(2) आरण्यकोपात्ता फलप्रसूतिः यस्य सः ( बहु० ) आरण्यकोपात्तफलप्रसूतिः qualifying नीवारः—whose corn (produce) has been appropriated (taken away) by the forest-dwellers.

6. स्तम्बेन—काण्डेन, by means of mere stalk.
7. अवशिष्टः —remaining, अव+शिष्+क्त ।
8. नीवारः इव—like *nivara* plant.
9. आभासि—शोभसे, you shine.

स्थाने भवानेकनराधिपः सन्न-
किंचनत्वं मखजं व्यनक्ति ।
पर्यायपीतस्य सुरैर्हिमांशोः
कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥ १६ ॥

सञ्जी० । भवानेकनराधिपः सार्वभौमः सन् मखजं मखजन्यम् । न विद्यते किंचन यस्येत्यकिंचनः। मयूरव्यंसकादित्वात्तत्पुरुषः । तस्य भावस्तत्वं निर्धनत्वं व्यनक्ति प्रकटयति । स्थाने युक्तम् । 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः । तथापि सुरैर्देवैः पर्यायेण क्रमेण पीतस्य हिमांशोः कलाक्षयो वृद्धेरुपचयाच्छ्लाघ्यतरो हि वरः खलु । (मणिः शाणोल्लीढः समरविजयी हेतिनिहतो मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः । कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः ॥ ) इति भावः । अत्र कामन्दकः— ( धर्मार्थं क्षीणकोषस्य क्षीणत्वमपि शोभते । सुरैः पीतावशेषस्य कृष्णपक्षे विधोरिव ॥ ) इति ।

**Prose Order** :—भवान् एकनराधिपः ( सन् ) मखजम् अकिञ्चनत्वं व्यनक्ति स्थाने । सुरैः पर्यायपीतस्य हिमांशोः कलाक्षयः वृद्धेः श्लाघ्यतरः हि ।

**Hindi Translation** :—चक्रवर्ती राजा होते हुए ( भी ) आप यज्ञ से उत्पन्न हुई निर्धनता प्रकट कर रहे हैं सो उचित ही है, क्योंकि जब देवता लोग अपनी अपनी बारी पर चन्द्रमा ( का अमृत ) पी लेते हैं, तब उनकी कलाओं का क्षीण होना, उनकी वृद्धि की अपेक्षा, अधिक प्रशंसनीय होता है ।

**English Translation** :—It is but proper that you, a paramount monarch, show (your) poverty which has been caused by a sacrifice; for the waning of the moon (whose nectar is) drunk by the gods in their turns is more praiseworthy than her waxing

**Purport in Sanskrit** :—यत् चक्रवर्ती सन् भवान् मखकृतां दरिद्रतां प्रकटयति तद् युक्तमेव । इदं दारिद्र्यं भवतः अधिकतरायै कीर्तये—अनेन तु भवतः शोभा अतितरां वर्धते । देवाः यथा यथा चन्द्रमसः कलाः पिबन्ति तथा तथा तस्य कलाः क्षीयन्ते । अन्ततो निःशेषासु कलासु पीतासु चन्द्रः पुनरपि शनैः शनैः वर्धितुमारभते । परन्तु चन्द्रमसः स क्षयः वृद्धेः शोभनीयतरः प्रतिभाति । एवमेव दारिद्र्ये अवस्थितो भवानपि अतिमहतीं शोभां धारयति । परोपकाराय सतां विभूतयः ।

**Change of Voice** :—भवता एकनराधिपेन ( सता ) मखजम् अकिञ्चनत्वं व्यज्यते स्थाने । सुरैः पर्यायपीतस्य हिमांशोः कलाक्षयेण वृद्धेः श्लाघ्यतरेण ( भूयते ) हि ।

## Notes

1. एकनराधिपः —(1) नराणाम् अधिपः इति नराधिपः ( ष० त० ), lord of men, protector of men ; अधिकं पाति इति अधिपः —अधि+पा+क ( आतश्चोपसर्गे )। (2) एकश्चासौ नराधिपश्च इति एकनराधिपः अर्थात् सार्वभौमः, sole monarch, paramount sovereign.
2. मखजम्—मखात् ( यज्ञात् ) जातम् इति मखजम् ( उपपद-तत्पुरुष ), born of sacrifice, caused by sacrifice.
3. अकिंचनत्वम्—न विद्यते किंचन (anything) यस्य स अकिंचनः अर्थात् दरिद्रः ( मयूरव्यंसकादित्वात्तत्पुरुषः ) तस्य भावः अकिंचनत्वम् अर्थात् निर्धनत्वम्, poverty.
4. व्यनक्ति—प्रकटयति. evince, show, manifest.
5. स्थाने—युक्तम्, (it is but) proper.
6. सुरैः—देवैः, by the gods.
7. पर्यायपीतस्य—पर्यायेण ( क्रमेण ) पीतस्य ( तृ० त० ), of one who is drunk by turns.
8. देवैः पर्यायपीतस्य हिमांशोः —of the moon who is drunk by the gods in their turns.
9. हिमांशोः —हिमो गुणो विद्यते येषां ते हिमाः ; हिम+मतुप्। (But this मतुप् is dropped after words expressive of qualities by the rule गुणवचनेभ्यो मतुपो लुगिष्टः ) हिमाः अंशवः ( किरणाः ) यस्य सः हिमांशुः ( बहु० ) तस्य, of the moon.
10. कलाक्षयः —कलानां क्षयः ( क्षि+अच् ) अर्थात् कला-नाशः, waning. षष्ठी तत्पुरुष।

11. वृद्धेः—उपचयात्, than waxing. वृध्+क्तिन्।
12. श्लाघ्यतरः हि—घरः खलु, is indeed more praiseworthy.
For the allusion as to how and why the moon is drunk by the gods see notes under verse 73 Canto 1.

Compare भर्तृहरि :—

मणिः शाणोल्लीढः समरविजयी हेतिनिहतः
मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः ।
कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता
तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः ॥

Also कामन्दक :—

धर्मार्थे क्षीणकोषस्य क्षीणत्वमपि शोभते ।
सुरैः पीतावशेषस्य कृष्णपक्षे विधोरिव ॥

तदन्यतस्तावदनन्यकार्यो
गुर्वर्थमाहर्तुमहं यतिष्ये ।
स्वस्त्यस्तु ते निर्गलिताम्बुगर्भं
शरद्घनं नार्दति चातकोऽपि ॥ १७ ॥

सञ्जी० । तत्तस्मात्तावदनन्यकार्यः 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इति विश्वः। प्रयोजनान्तररहितोऽहमन्यतो वदान्यान्तराद्गुर्वर्थं गुरुधनमाहर्तुं यतिष्य उद्योक्ष्ये। ते तुभ्यं स्वस्ति शुभमस्तु । "नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च" इत्यनेन चतुर्थी। तथाहि । चातकोऽपि (धरणीपतितं तोयं चातकानां रुजाकरम्) इति हेतोरनन्यगतिकोऽपीत्यर्थः। निर्गलितोऽम्बेव ...

शरदि घनं जलपूर्णं नार्दति न याचते। 'अर्द गतौ याचने च' इति धातुः। 'याचनार्थे स्मेऽर्दनम्' इति माधवः।

**Prose Order** :—तत् तावत् अनन्यकार्यः अहम् अन्यतः गुर्वर्थम् आहर्तुं यतिष्ये। ते स्वस्ति अस्तु। चातकोऽपि निर्गलिताम्बुगर्भं शरद्घनं न अर्दति।

**Hindi Translation** :—मुझे तो (अब) दूसरा काम नहीं; इस लिए मैं किसी दूसरे से, गुरु के वास्ते धन लाने की कोशिश करूँगा। आपका भला हो। (देखिए) चातक भी, शरद् ऋतु के बादलों से याचना नहीं करता क्योंकि उस समय उन में जल नहीं रह जाता है।

**English Translation** :—Therefore, I, having no other work to do, will try to get money for my preceptor from some one else; good betide thee. Even the *chataka* bird does not beg of the autumnal cloud shorn of its watery contents.

**Purport in Sanskrit** :—हे राजन्, गुरुदक्षिणा तु मया कुतश्चित् अवश्यम् आनेतव्या; गुरुदक्षिणां विहाय मम अन्यत् किमपि कर्तव्यं नास्ति, अतः अन्यस्मात् कस्माच्चित्पुरुषात् तां लब्धुं प्रयत्नं करिष्यामि। अस्मिन् विषयेऽहं भवन्तं याचितुं नेच्छामि। संसारे जलं वृष्ट्वा शरदृतौ मेघाः जलरहिता जायन्ते, अतः पक्षियोनिजश्चातकोऽपि तेभ्यो याच्ञां न करोति। यतोऽसौ यदि याच्ञां कुर्यात् तर्हि ते क्लेशिता भवेयुः। अहं तु तावत् साक्षरो मनुष्यः; कथमहं निर्धनं भवन्तं याच्ञया दुःखीकर्तुं शक्नोमि।

**...ge of Voice** :—तत् तावत् अनन्यकार्येण मया अन्यतः

गुर्वर्थः आहर्तुं यतिष्यते। त्वया स्वस्तिमना भूयताम् । चातकेन अपि निर्गलिताम्बुगर्भः शरद्घनः न अर्द्यते।

## Notes.

1. तद्—तस्मात्, therefore.
2. तावदनन्यकार्यः—तावद् means साकल्येन, entirely; अविद्यमानम् अन्यत् कार्यम् यस्य: सः अनन्यकार्यः ( बहु० ), one who has not got to do any other business (than trying to procure money for my teacher); तावत् ( साकल्येन ) अनन्यकार्यः इति तावदनन्यकार्यः, one who has absolutely got no other work to do. For the meaning of तावत् Mallinatha quotes विश्व—यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे।
3. तावदनन्यकार्यः अहम्—I who have absolutely got no other business to perform.
4. अन्यतः—दात्रन्तरात्, वदान्यान्तरात्, from some other donor.
5. गुर्वर्थम्—गुरोः अर्थः ( धनम् ) इति गुर्वर्थः ( तादर्थ्ये षष्ठी समासः like अश्वघासः ) तम् गुर्वर्थम्, money for my preceptor.
6. आहर्तुम्—आनेतुम्, अर्जयितुम्, प्राप्तुम् to get; आ+हृ +तुमुन्।
7. यतिष्ये -प्रयत्नम् (उपायं) करिष्ये, I shall endeavour, I shall try.
8. ते—तुभ्यम्।
9. स्वस्ति—शुभम्, welfare, good, well.
10. अस्तु—भवतु।

यस्य तं शरद्घनं नार्दति न याचते। 'अर्द गतौ याचने च' इति धातुः। 'याचनार्थे ह्योऽर्दनम्' इति यादवः।

**Prose Order** :—तद् तावदनन्यकार्यः अहम् अन्यतः गुर्वर्थम् आहर्तुं यतिष्ये। ते स्वस्ति अस्तु। चातकोऽपि निर्गलिताम्बुगर्भं शरद्घनं न अर्दति।

**Hindi Translation** :—मुझे तो (अब) दूसरा काम नहीं; इस लिए मैं किसी दूसरे से, गुरु के वास्ते धन लाने की कोशिश करूँगा। आपका भला हो। (देखिए) चातक भी, शरद् ऋतु के बादलों से याचना नहीं करता क्योंकि उस समय उन में जल नहीं रह जाता है।

**English Translation** :—Therefore, I, having no other work to do, will try to get money for my preceptor from some one else; good betide thee. Even the *chataka* bird does not beg of the autumnal cloud shorn of its watery contents.

**Purport in Sanskrit** :—हे राजन्, गुरुदक्षिणा तु मया कुतश्चित् अवश्यम् आनेतव्या; गुरुदक्षिणां विहाय मम अन्यत् किमपि कर्तव्यं नास्ति, अतः अन्यस्मात् कस्माच्चित्पुरुषात् तां लब्धुं प्रयत्नं करिष्यामि। अस्मिन् विषयेऽहं भवन्तं याचितुं नेच्छामि। संसारे जलं वृष्ट्वा शरदृतौ मेघाः जलरहिता जायन्ते, अतः पक्षियोनिजश्चातकोऽपि तेभ्यो याच्ञां न करोति। यतोऽसौ यदि याच्ञां कुर्यात् तर्हि ते क्लेशिता भवेयुः। अहं तु तावत् साक्षरो मनुष्यः; कथमहं निर्धनं भवन्तं याच्ञया दुःखीकर्तुं शक्नोमि।

**Change of Voice** :—तद् तावद् अनन्यकार्येण मया अन्यतः

पूछा—हे विद्वन्, तुम्हें अपने गुरु को कौन सी वस्तु देनी है और कितनी ?

**English Translation** :—When the great sage's disciple wished to go away after having said this much, the king stopped and asked him "O learned Sir, what thing and how much have you to give your preceptor ?"

**Purport in Sanskrit** :—यदा एवं कथयित्वा कौत्स प्रस्थानायोद्यतो वभूव तदा राजा तं गमनात् निषिध्य विनय पूर्वकमुवाच—हे विद्वन् स्वगुरवे भवान् कां दक्षिण दातुमिच्छति । किं च तस्याः दक्षिणायाः परिमाणम्—इति ।

**Change of Voice** :—एतावद् उक्त्वा प्रतियातुकामः महर्षे शिष्यः नृपतिना निषिध्य, "हे विद्वन् त्वया गुरवे प्रदेयेन वस्तुन केन ( भूयते ) कियता वा " इति सः अन्वयुज्यत ।

## Notes

1. एतावद्—this much. ( इतना )
2. उक्त्वा—कथयित्वा, having said, वच्+क्त्वा ।
3. प्रतियातुकामम्—प्रतियातुं ( प्रतिगन्तुं to go back) काम ( इच्छा ) यस्य तम् ( वहु० ), him whose desire was to return : him who desired to go back ; प्रति+या+तुमुन् ।
4. महर्षेः—of the great sage, *i.e*, of Varatantu.
5. शिष्यम्—disciple. एतावद् उक्त्वा प्रतियातुकामम् महर्षेः शिष्यम्— when the great sage's disciple had said this much and had started to go away (ho
6. महर्षेः शिष्यम्—कौत्सम् ।

7. नृपतिः—नृणां पतिः ( ष० त० ), lord of men, *i. e.*, रघुः ।
8. निषिध्य—निवार्य, having prevented. नि+सिध्+ल्यप् ।
9. प्रदेयम्—that which is to be given प्र+दा+यत्
10. प्रदेयं वस्तु किम्—what is that thing which is to be given to the preceptor.
11. कियत्—किं परिमाणम्, how much.
12. इति—this.
13. तम्—कौत्सम् ।
14. अन्वयुङ्क्त—अपृच्छत् , asked.

ततो यथावद्विहिताध्वराय
तस्मै स्मयावेशविवर्जिताय ।
वर्णाश्रमाणां गुरवे स वर्णी
विचक्षणः प्रस्तुतमाचचक्षे ॥ १९ ॥

सञ्जी० । ततो यथावद्यथार्हम् अर्हार्थे वतिः । विहिताध्वराय विधिवदनुष्ठितयज्ञाय सदाचारायेत्यर्थः । स्मयावेशविवर्जिताय गर्वाभिनिवेशशून्याय अनुद्धतायेत्यर्थः । वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्यादीनां च गुरवे नियामकाय ' वर्णाः स्युर्ब्राह्मणादयः ' इति । ' ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये । आश्रमोऽस्त्री इति चामरः । सर्वकार्यनिर्वाहकायेत्यर्थः । तस्मै रघवे । विचक्षणो विद्वान्वर्णी ब्रह्मचारी ' वर्णिनो ब्रह्मचारिणः ' इत्यमरः । " वर्णाद्ब्रह्मचारिणि " इतीनिप्रत्ययः कौत्सः स प्रस्तुतं प्रकृतमाचचक्षे ।

Prose Order :—ततः यथावद् विहिताध्वराय, स्मयावेशविवर्जिताय, वर्णाश्रमाणां गुरवे, तस्मै विचक्षणः वर्णी सः प्रस्तुतम् आचचक्षे ।

**Hindi Translation** :—तदनन्तर जिसने विधि पूर्वक यज्ञ सम्पादन किया था, जो अभिमान के प्रभाव से (बिल्कुल) हीन था, जो (चारों) वर्णों और (चारों) आश्रमों का पालक था, उस राजा रघु से, विद्वान् ब्रह्मचारी ने अपना प्रयोजन कहा।

**English Translation** :—Then, the learned ascetic told his purpose to him who guided the (four) classes and the (four) stages of life, who was (absolutely) devoid of the influence of pride, and who had duly performed a sacrifice.

**Purport in Sanskrit** :—यद्यपि रघुः महता विश्वजिता यज्ञेन इष्टवान्, यद्यपि चासौ चतुर्णां ब्राह्मणक्षत्रियवैश्यशूद्राणां वर्णानां, चतुर्णाम् चाश्रमाणां मार्गदर्शकोऽभूत् (नियामकः), तथापि सः सर्वथा दर्पप्रभावशून्यः आसीत्। ईदृशाय रघवे सः विद्वान् ब्रह्मचारी कौत्सः स्वकीयं प्रयोजनं कथयमास।

**Change of Voice** :—ततः यथावद् विहिताध्वराय स्मयावेशविवर्जिताय वर्णाश्रमाणां गुरवे तस्मै विचक्षणेन वर्णिना तेन प्रस्तुतम् आचचक्षे

## Notes.

1. ततः—तदनन्तरम्, then, after that.
2. यथावद्—यथार्हम्, विधिपूर्वकम् duly, properly, according to the Shastra, यथा – वत् ( अर्हार्थे वतिप्रत्ययः )।
3. विहिताध्वराय—विहितः ( कृतः ) अध्वरः ( यज्ञः ) येन सः विहिताध्वरः ( बहु० ) तस्मै विहिताध्वराय अर्थात् अनुष्ठितयज्ञाय, to him who had performed a sacrifice.
विहित—वि + धा + क्त।

**Purport in Sanskrit** :—यदाऽहम् विद्याध्ययनं समाप्तवान् तदा तं प्रार्थितवान्—मां दक्षिणां याचय इति । परन्तु महर्षिः स्नेहात् उवाच—हे वत्स ! तव दृढया भक्त्यैवाहमतीव प्रीतोऽस्मि, किं दक्षिणया इति ।

**Change of Voice** :—समाप्तविद्यः अहं महर्षिम् गुरुदक्षिणायै विज्ञापितवान्, तेन चिराय अस्खलितोपचारा सा मे भक्तिः एव पुरस्तात् अगण्यत ।

## Notes.

1. समाप्तविद्येन—समाप्ता विद्या यस्य तेन ( बहु० ) by one whose education was over.
2. समाप्तविद्येन मया—by me whose education was over, *i.e.*, when I had finished my education.
3. महर्षिः—great sage, *i.e.*, my preceptor Varatantu.
4. गुरुदक्षिणायै—गुरोः दक्षिणायै इति गुरुदक्षिणायै ( तादर्थ्ये षष्ठीसमासः ), गुरुदक्षिणास्वीकारार्थम्, to accept the preceptor's fee (tuition fee).
5. विज्ञापितः अभूत्—प्रार्थितः अभूत्, was requested, was told.
6. सः—मम गुरुः ।
7. चिराय—this is an indeclinable used as an adjective of भक्तिम्—चिराय भक्तिं should mean here चिरकालसम्बन्धिनीम् भक्तिम्, long devotion.
8. अस्खलितोपचाराम्—उपचार means सेवा, उप+चर्+घञ्; अस्खलित—न स्खलितः इति अस्खलितः ( अभ्रष्टः );

विद्यामूल्यस्याल्पेतरत्वादतिमहत्त्वात्त्वं प्रत्युपरोद्धुं निर्बन्धुं नात्सहे।

**Prose Order** :—सः अहं सपर्याविधिभाजनेन भवन्तं प्रभुशब्दशेषं मत्वा श्रुतनिष्क्रयस्य अल्पेतरत्वात् सम्प्रति उपरोद्धुं न उत्सहे।

**Hindi Translation** :—मैं पूजा की सामग्री वाले पात्र हीं से समझ गया कि आपके पास (केवल) 'प्रभु' शब्द ही शेष रह गया है। विद्याओं के बदले में मुझे जो मूल्य ( देना है वह भी) थोड़ा नहीं। इस कारण अब मैं आप से आग्रह नहीं करना चाहता।

**English Translation** :—Inferring from your pot of offerings that the mere title of 'sovereign' remains to you, I do not venture to constrain you now, since the price (too) of my learnings is very high.

**Purport in Sanskrit** :—भवतः मृन्मयानि पात्राणि दृष्ट्वैव अहमनुमितवान् यद्भवतः सम्पूर्णं धनागारं निःशेषतां गतम्, भवत्सकाशे न स्वल्पमपि धनं विद्यते। एतदप्यहं जानामि यदिदानीं भवतः पार्श्वे केवलं राजशब्द एव वर्तते इति। अपरं च मे विद्यायाः मूल्यमति महत्। अस्मात्कारणात् सम्प्रत्यहं भवन्तम् अनुरोद्धुं नेच्छामि।

**Change of Voice** :—तेन मया सपर्याविधिभाजनेन भवन्तं प्रभुशब्दशेषं मत्वा श्रुतनिष्क्रयस्य अल्पेतरत्वात् सम्प्रति उपरोद्धुं नोत्सह्यते।

## Notes.

1. सः अहं——I who am placed under these circumstances.

2. सपर्याविधिभाजनेन—सपर्या means पूजा ; सपर्यायाः विधिः इति सपर्याविधिः (प० त०) तस्य भाजनेन (प० त०), by the pot that contained the materials for worship.
3. प्रभुशब्दशेषम्—प्रभुः इति एव शब्दः इति प्रभुशब्दः ; सः एव शेषः यस्य तम् ( बहु० ) him who has only the title of 'sovereign' remaining to him. भवन्तं प्रभुशब्दशेषं मत्वा—Inferring that you have only the title of 'sovereign' remaining to you.
4. मत्वा—बुद्ध्वा, ज्ञात्वा, concluding, guessing, inferring ; मन् + क्त्वा ।
5. श्रुतनिष्क्रयस्य—श्रुतस्य ( विद्यायाः ) निष्क्रयस्य ( मूल्यस्य ), of the price of knowledge.
6. अल्पेतरत्वात्—अल्पाद् इतरः इति अल्पेतरः अर्थात् अधिकः, other than low, *i.e.*, very high, very heavy, very exhorbitant; अल्पेतरस्य भावः अल्पेतरत्वम् तस्मात्, on account of the price of knowledge being very exhorbitant.
7. सम्प्रति—इदानीम्, at present, now.
8. उपरोद्धुम्—अनुरोद्धुम्, to insist on, to constrain. उप + रुध् + तुमुन्.
9. न उत्सहे—नेच्छामि. I have no mind, I do not venture.

---

इत्थं द्विजेन द्विजराजकान्ति-
रावेदितो वेदविदां वरेण ।
एनोनिवृत्तेन्द्रियवृत्तिरेनं
जगाद भूयो जगदेकनाथः ॥ २३ ॥

इत्थमि० । द्विजराजकान्तिश्चन्द्रकान्तिः । 'द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः ' इत्यमरः । ( अग्रजन्मानो द्विजा वेद ब्राह्मणानाम् ) इति अर्थः । द्विजराजकान्तिरनेनाभ्यागतविशेषणं सूचयति । एनसः पापान्निवृत्तेन्द्रियवृत्तिर्यस्य स जगदेकनाथो रघुर्वेदविदां वरेण श्रेष्ठेन द्विजेन कौत्सेनेत्थमावेदितो निवेदितः सन् एनं कौत्सं भूयः पुनर्जगाद ।

**Proso Order** :—द्विजराजकान्तिः एनोनिवृत्तेन्द्रियवृत्तिः जगदेकनाथः वेदविदां वरेण द्विजेन इत्थम् आवेदितः ( सन् ) एनं भूयः जगाद ।

**Hindi Translation** :—जिसकी कान्ति चन्द्रमा के समान थी, जिसकी इन्द्रियों के व्यापार में पाप छू तक नहीं गया था, ऐसे सार्व-भौम ( रघु ) ने, वेदवेत्ताओं में श्रेष्ठ, ब्राह्मण कौत्स का यह निवेदन सुनकर फिर उत्तर दिया ।

**English Translation** :—Thus told by the Brahmana who was the best amongst the Vedic scholars, the sole monarch of the world, who possessed the lustre of the morn, and whose tendencies of senses were far removed from sin, spoke to him again.

**Purport in Sanskrit** :—शशीव प्रजाह्लादकः परमधार्मिकः

सम्राड् रघुः वेदवित्सु श्रेष्ठेन कौत्सेन तथा विज्ञापितः सन् पुनस्तमुवाच ।

Change of Voice :—द्विजराजकान्तिना एनोनिवृत्तेन्द्रियवृत्तिना जगदेकनाथेन वेदविदां वरेण द्विजेन इत्थम् आवेदितेन एव भूयः जगदे ।

## Notes.

1. द्विजराजकान्तिः—द्विजराज means चन्द्र moon. द्विजराजस्य कान्तिरिव कान्तिर्यस्य सः ( बहु० ). he whose lustre was like that of the moon.
2. एनोनिवृत्तेन्द्रियवृत्तिः—एनस् means पाप : निवृत्त—removed: वृत्ति—व्यापार, action, propensity, tendency.एनसः ( पापात् ) निवृत्ता ( दूरीभूता ) इन्द्रियाणां वृत्तिः यस्य ( बहु० ). he whose propensity of senses was far removed from sins.
3. जगदेकनाथः— जगतः ( संसारस्य ) एकनाथः ( एकनराधिपः sovereign) ; sole monarch of the world.
4. वेदविदाम्—वेदवेतॄणाम् . वेदज्ञानाम् . of those who are versed in the Vedas ; वेदं विदन्ति इति वेदविदः. तेषाम् । वेद+विद्+क्विप् ) ।
5. वरेण—श्रेष्ठेन, by the chief.
6. द्विजेन—ब्राह्मणेन , कौत्सेन ।
7. इत्थम् आवेदितः सन्—अनेन प्रकारेण कथितः सन् , being thus addressed.
8. एतत्—कौत्सम् ।
9. भूयः—पुनः, again.
10. जगाद—उवाच . spoke.

to some other donor—let not this new censure come upon my head."

Purport in Sanskrit :—सकलवेदशास्त्रवेत्ता कश्चिद् ब्राह्मणः गुरवे दक्षिणां दातुकामः रघुं शरणमाजगाम, परन्तु तस्य मनोरथं पूरयितुमसौ नाशक्नोत् ; अतोऽसौ ब्राह्मणः कस्यचिदन्यस्य दातुः पार्श्वे याचनार्थं गतवान्—इति नवीनो लोकापवादो मे मा भूत्।

Change of Voice :—श्रुतपारदृश्वना, गुर्वर्थम् अर्थिना, रघोः सकाशात् कामम् अनवाप्य वदान्यान्तरं गतम् इति अनेन परीवादनवावतारेण मे मा भावि।

## Notes

1. श्रुतपारदृश्वा—श्रुतस्य ( विद्यानां, शास्त्राणां ) पारं दृष्टवान् इति श्रुतपारदृश्वा, one who had seen the other end of the Shastras, *i.e.*, who had thoroughly mastered the Shastras ; श्रुत+पार+दृश+क्वनिप्।
2. गुर्वर्थम्—गुरवे इदम् गुर्वर्थम् अथवा गुरोः अर्थो यस्मिन् कर्मणि, तद् यथा स्यात्तथा, it is an adverb, meaning 'for the sake of the preceptor,' *i.e.*, in order to pay Dakshina to the preceptor.
3. अर्थी—याचकः needy, suitor.

श्रुतपारदृश्वा and गुर्वर्थम्—that he was fully versed in the Shastras and that he had become a suitor for the sake of his Guru and not for himself were the two points for consideration ; and these were the two reasons why Kauts did not deserve refusal.

दिनानि। "संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये" इति बहुव्रीहिः। "बहुव्रीहौ संख्येये डजबहुगणात्" इति डच्प्रत्ययः समासान्तः। सोढुमर्हसि। हे अर्हन्नाम्य ! त्वदर्थं तव प्रयोजनं साधयितुं यावद्यते यतिष्ये। "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट्।

Prose Order :—सः त्वं प्रशस्ते महिते मदीये अग्न्यगारे चतुर्थः अग्निः इव वसन् द्वित्राणि अहानि सोढुम् अर्हसि। (हे) अर्हन् ! त्वदर्थं साधयितुं यावद् यते।

Hindi Translation :—सो आप चौथे अग्नि की तरह मेरी प्रसिद्ध तथा पूज्य अग्निशाला में दो तीन दिन ठहरें। तब तक मैं आप का मनोरथ सिद्ध करने के लिए उपाय करता हूँ।

English Translation :—O Venerable Sir, you then stay in my famous and adorable sanctuary of fires for two or three days like a fourth fire, while I try to accomplish your purpose.

Purport in Sanskrit :—हे भगवन् ! आहवनीयगार्हपत्य-दक्षिणाग्नित्रयशोभिते मम विशुद्धे प्रसिद्धे अग्निगृहे मूर्तिमान् चतुर्थः अग्निः इव द्वे त्रीणि वा दिनानि निवासं कुरु, यावदहं तव कार्यस्य साधनाय यत्नं करोमि।

Change of Voice :—तेन त्वया प्रशस्ते महिते मदीये अग्न्यगारे चतुर्थेन अग्निना इव वसता द्वित्राणि अहानि सोढुम् अर्ह्यते। हे अर्हन्, त्वदर्थं साधयितुं यावत् मया यत्यते।

## Notes

1. प्रशस्ते—प्रसिद्धे, famous.
2. महिते—पूज्ये, adorable, revered.

3. मदीये—my.
4. अग्न्यगारे—अग्नीनाम् अगारं ( गृहं, शाला) इति अग्न्यगारम् तस्मिन्, in the house (sanctuary) of holy fires. The three fires meant here are आहवनीय, गार्हपत्य, दक्षिण ।
5. चतुर्थः अग्निः इव—like a fourth fire.
6. वसन्—निवासं कुर्वन्, staying. वस्+शतृ ।
7. द्वित्राणि—द्वे त्रीणि वा इति द्वित्राणि ( बहु० ), two or three. द्वि+त्रि डच् ( बहुव्रीहौ संख्येये डजबहुगणात् ) ।
8. सोढुम्—to bear i.e., to wait.
9. अर्हसि—योग्योऽसि, you deserve.
10. हे अर्हन्—हे मान्य, O revered one.
11. त्वदर्थम्—तव अर्थम् इति त्वदर्थम् (ष० त०) तव प्रयोजनम् इत्यर्थः, your purpose.
12. साधयितुम्—पूरयितुम्, to accomplish, to fulfil.
13. यावत्—while, by the time.
14. यते—यतिष्ये, shall try. This present tense is used in the sense of future tense. यावत्पुरानिपातयोर्लट् इति भविष्यदर्थे लट् ।

तथेति तस्यावितथं प्रतीतः
प्रत्यग्रहीत्सङ्गरमग्रजन्मा ।
गामात्तसारां रघुरप्यवेक्ष्य
निष्क्रष्टुमर्थं चकमे कुबेरात् ॥ २६ ॥

० । अग्रजन्मा ब्राह्मणः प्रतीतः प्रीतः सन् तस्य रघोः अवितथ-
प्रतिज्ञाम् 'अथ प्रतिज्ञाजितसंविदापत्सु सङ्गरः'

इत्यमरः। 'तां गिरम्' इति केचित्पठन्ति। तथेति प्रत्यग्रहीत्। रघुरपि गां भूमिमात्तसारां गृहीतधनामवेक्ष्य कुबेरादर्थं निष्क्रष्टुमाहर्तुं चकम इयेष।

**Prose Order** :—अग्रजन्मा (कौत्सः) प्रतीतः (सन्) तस्य अवितथं संगरं 'तथा' इति प्रत्यग्रहीत्। रघुः अपि गाम् आत्तसाराम् अवेक्ष्य कुबेरात् अर्थं निष्क्रष्टुं चकमे।

**Hindi Translation**:—उस ब्राह्मण ने 'बहुत अच्छा' कहकर उसकी अमोघ प्रतिज्ञा स्वीकार की। रघुने भी देखा कि पृथ्वी का सारा द्रव्य (मैंने पहिले ही) ले लिया है। इस लिए उन्होंने कुबेर से धन लेने की इच्छा की।

**English Translation** :—Saying 'Be it so' the delighted Brahmana accepted his infallible promise. Raghu too finding that the earth was (already) drained of its substance (wealth), desired to procure money from Kubera.

**Purport in Sanskrit** :—रघोः वाक्येन प्रसन्नः कौत्सः तस्य सत्यां प्रतिज्ञां स्वीचकार। रघुरपि विचारयामास यत्पृथिव्याः अखिला सम्पत्तिः मया आदावेव दिग्विजयावसरे गृहीता, अधुना तस्याः सकाशे न किमपि धनं इति विचिन्त्य सः कुबेरात् धनं बलादाहर्तुम् इयेष।

**Change of Voice** :—अग्रजन्मना प्रतीतेन सता तस्य अवितथः संगरः 'तथा' इति प्रत्यग्राहि। रघुणा अपि आत्तसारां गाम् अवेक्ष्य कुबेरात् अर्थं निष्क्रष्टुं चकमे।

## Notes.

1. अग्रजन्मा—अग्रे जन्म यस्य सः अग्रजन्मा (बहु० ) ब्राह्मणः, Brahmana. Literally this word m

by the pronouncement of *mantras.* (4) वसिष्ठमन्त्रोक्षणात् जातः इति वसिष्ठमन्त्रोक्षणजः तस्मात् (उपपद्तत्पु०) born of Vasistha's sprinkling which was accompanied by the pronouncement of *mantras.*

2. वसिष्ठमन्त्रोक्षणजात् प्रभावात् - on account of the power born of Vashistha's sprinkling accompanied by the pronouncement of *mantras.* The Ablative case in प्रभावात् should be accounted for by the rule हेतौ पञ्चमी, for the प्रभाव was the cause towards the motion of the car being unobstructed.

3. उदन्वदाकाशमहीधरेषु— (1) उदन्वान् means समुद्र, sea; उदक+मतुप्; the word उदक becomes उदन् before मतुप् and धि in the sense of 'sea' उदन्वानुदधौ। But when the sense is that of possession then the form will be उदकवत्, *e. g.*, उदकवान् कासारः, उदकवती नदी, उदकवत् सरः। (2) महीधर means पर्वत, mountain. (3) उदन्वांश्च आकाशं च महीधरश्च इति उदन्वदाकाशमहीधराः तेषु (द्वन्द्व) on the mountains, in the sky, on the sea.

4. मरुत्सखस्य—मरुतः सखा इति मरुत्सखः (ष० त०) तस्य मरुत्सखस्य अर्थात् वायुसहायस्य, of the friend of wind; वलाहक (cloud) is the companion of wind मरुत्सखा+टच् (राजाहः सखिभ्यष्टच्)। It should not be taken as a बहुव्रीहि समास, for then the समासान्त टच् प्रत्यय, cannot be had.

5. बलाहकस्य—मेघस्य, of the cloud.
6. तद्रथस्य—तस्य ( रघोः ) रथः इति तद्रथः ( ष० त० ) तस्य, of his chariot.
7. गतिः—course, passage, motion.
8. न विजघ्ने—न विहता, was not obstructed ; विजघ्ने वि+हन्+कर्मकर्तरि लिट् ।

अथाधिशिश्ये प्रयतः प्रदोषे
रथं रघुः कल्पितशस्त्रगर्भम् ।
सामन्तसंभावनयैव धीरः
कैलासनाथं तरसा जिगीषुः ॥ २८ ॥

सञ्जी० । अथ प्रदोषे रजनीमुखे तत्काले यानाधिरोहणाभिधानात् प्रयतो धीरो रघुः समन्ताद्भवः सामन्तः राजमात्रमिति संभावनयैव कैलासनाथं कुबेरं तरसा बलेन जिगीषुर्जेतुमिच्छुः सन् कल्पितं सज्जितं शस्त्रं गर्भे यस्य तं रथमधिशिश्ये रथे शयितवानित्यर्थः । "अधिशीङ्स्थासां कर्म" इति कर्मत्वम् ।

Prose Order :—अथ प्रदोषे प्रयतः धीरः रघुः सामन्तसम्भावनया एव कैलासनाथं तरसा जिगीषुः ( सन् ) कल्पितशस्त्रगर्भम् रथम् अधिशिश्ये ।

Hindi Translation :—इसके उपरान्त, कुवेर को एक साधारण राजा समझ कर और ( अपने ) पराक्रम से उसे जीतने की इच्छा कर, रथ के अन्दर (तमाम) अस्त्र शस्त्र रखकर सायंकाल को पवित्र तथा धैर्यवान् रघु ने उसी में किया ।

**English Translation** :—Then in the evening self-controlled and firm-minded Raghu, desirous of conquering Kubera by his valour and considering him as a mere feudatory prince slept in his chariot inside which (he had) arranged weapons (of all kinds).

**Purport in Sanskrit** :—रघुः कुबेरं साधारणं राजानमिवामन्यत, तं च स्वबलेन जेतुं निश्चित्य रथे विविधास्त्रशस्त्राणि निधाय सायं तस्मिन्नेव सुष्वाप।

**Change of Voice** :—अथ प्रदोषे प्रयतेन धीरेण रघुणा सामन्तसम्भावनया एव कैलासनाथं तरसा जिगीषुणा ( सता ) कल्पितशस्त्रगर्भः रथः अधिशिश्ये।

## Notes.

1. प्रदोषे—सायङ्काले, रजनीमुखे, in the evening; see notes on verse 93, canto 1. Mallinatha says तत्काले यानाधिरोहणविधानात् *i. e.*, the *Shastras* lay down riding on car in the evening.
2. प्रयतः—self-controlled; one who has restrained his passions; self-restrained प्र+यम्+क्त।
3. धीरः—धैर्यवान्, resolute, firm-minded.
4. रघुः—Raghu.
5. सामन्तसम्भावनया—(1) सम्भावना means विचार, consideration, (2) समन्त means 'border, frontier' समन्ताद्भवः सामन्तः a frontier-chieftain, a feudatory prince; सामन्तः इति सम्भावनया इति सामन्तसम्भावनया,

with the idea that he (Kubera) was a mere feudatory prince. The idea is that Raghu felt no much anxiety about overcoming Kubera; he regarded him as no better than a vassal.

6. कैलासनाथम्—कैलासस्य नाथं ( स्वामिनं ) अर्थात् कुबेरम्, Kubera.

7. तरसा—बलेन, by his prowess; तरः तरसी तरांसि; तरसा तरोभ्याम् तरोभिः etc.

8. जिगीषुः—जेतुम् इच्छुः, desirous of conquering, जि+सन्+उ।

9. कल्पितशस्त्रगर्भम्—( 1 ) कल्पित—arranged, properly placed (2) गर्भ—inferior. कल्पितं ( निवेशितं ) शस्त्रं गर्भे ( मध्ये ) यस्य तं ( बहु० ), that in the interior of which there were arranged weapons; कल्पितशस्त्रगर्भम् रथम् अधिशिश्ये—slept in the car in the interior of which there were placed weapons (which contained weapons inside it).

10. रथम्—chariot. The Accusative case should be explained by the rule अधिशीङ्स्थासां कर्म।

11. अधिशिश्ये—शयितवान्, slept; अधि+शी+लिट्।

प्रातः प्रयाणाभिमुखाय तस्मै
　　सविस्मयाः कोषगृहे नियुक्ताः ।
हिरण्मयीं कोषगृहस्य मध्ये
　　वृष्टिं शशंसुः पतितां नभस्तः ॥ २९ ॥

सञ्जी० प्रातः प्रयाणाभिमुखाय तस्मै रघवे कोषगृहे नियुक्ता अधिकृता भाण्डागारिकाः सविस्मयाः सन्तः कोषगृहस्य मध्ये नभस्तो नभसः पञ्चम्यास्तसिप्रत्ययः पतितां हिरण्मयीं सुवर्णमयीम् "दाण्डिनायन०" इत्यादिना निपातनात्साधुः । वृष्टिं शशंसुः कथयामासुः ।

Prose Order :—प्रातः प्रयाणाभिमुखाय तस्मै कोषगृहे नियुक्ताः सविस्मयाः ( सन्तः ) कोषगृहस्य मध्ये नभस्तः पतितां हिरण्मयीं वृष्टिं शशंसुः ।

Hindi Translation :—प्रातः काल जब वह रवाना होने के लिए तैयार हुआ तब ख़ज़ाने में नियुक्त किये हुए पुरुष आश्चर्य में भरे हुए ( आकर ) उस से कहने लगे कि ख़ज़ाने के अन्दर आसमान से सोने की वृष्टि हुई है ।

English Translation :—In the morning, when he was about to start, the officers, employed in the treasury reported to him in astonishment of a shower of gold fallen from the sky into the treasury.

Purport in Sanskrit :—प्रातःकाले यदा रघुः प्रस्थानाय उद्यतो बभूव तदा कोषागारे नियुक्ताः राजपुरुषाः आश्चर्याविष्टाः सन्तः तत्पार्श्वं समागत्य कथयामासुः यत्कोषागारमध्ये आकाशात् सुवर्णस्य वृष्टिः पतिता ।

**Change of Voice** :—प्रातः प्रयाणाभिमुखाय तस्मै कोपगृहे नियुक्तैः सविस्मयैः ( सद्भिः ) कोपगृहस्य मध्ये नभस्तः पतिता हिरण्मयी वृष्टिः शशंसे ।

## Notes.

1. प्रातः—in the morning.
2. प्रयाणाभिमुखाय तस्मै—अभिगतं मुखमस्य इति अभिमुखं i. e., with face turned towards; प्रयाणस्य अभिमुखः इति प्रयाणाभिमुखः ( ष० त० ) तस्मै प्रयाणाभिमुखाय अर्थात् प्रस्थानोद्यताय, to him who was preparing for departure; to him when he was preparing to start.
3. तस्मै शशंसुः—शशंसुः means कथयामासुः ; तस्मै शशंसुः *'informed him' 'told him'*
4. प्रातः प्रयाणाभिमुखाय तस्मै शशंसुः—*told* him when he was preparing to start in the morning.
5. कोपगृहे —कोपस्य गृहे (ष० त०), धनागारे, in the treasury.
6. नियुक्ता :—अधिकृताः पुरुषाः, employed persons नि+युज्+क्त ।
7. सविस्मयाः—विस्मय , wonder ; विस्मयेन सह विद्यमानाः इति सविस्मयाः ( बहु ), becoming surprised, becoming astonished.
8. कोपगृहस्य मध्ये inside the treasury.
9. कोपगृहस्य मध्ये पतिताम्—fallen in the treasury.
10. कोपगृहस्य मध्ये नभस्तः पतितां—fallen from the sky in the treasury.

11. नभस्तः—आकाशात्, from the sky नभस्+तसिल्।
12. हिरण्मयीम्—सुवर्णमयीम्, abounding in gold.
13. वृष्टिम्—वर्षणम्, rain, वृष्+क्तिन्।
14. शशंसुः—कथयामासुः, told.
15. वृष्टिं शशंसुः—informed (him) of the rain; reported the rain.

तं भूपतिर्भासुरहेमराशिं
　　लब्धं कुबेरादभियास्यमानात्।
दिदेश कौत्साय समस्तमेव
　　पादं सुमेरोरिव वज्रभिन्नम्॥ ३०॥

सञ्जी०। भूपती रघुः अभियास्यमानादभिगमिष्यमाणात्कुबेराल्लब्धम् वज्रेण कुलिशेन भिन्नं सुमेरोः पादं प्रत्यन्तपर्वतमिव स्थितम् 'पादाः प्रत्यन्तपर्वताः' इत्यमरः। 'शृङ्गम्' इति क्वचित्पाठः। तं भासुरं भास्वरम् "भञ्जभासमिदो घुरच्"। हेमराशिं समस्तं कृत्स्नमेव कौत्साय दिदेश ददौ न तु चतुर्दशकोटिमात्रमित्येवकारार्थः।

Prose Order :—भूपतिः अभियास्यमानात् लब्धं वज्रभिन्नं सुमेरोः पादम् इव (स्थितं) तं भासुरहेमराशिं समस्तम् एव कौत्साय दिदेश।

Hindi Translation :- जिसके ऊपर आक्रमण किया जाने वाला था उस कुबेर से मिली हुई चमचमाते सुवर्ण की राशि सारी की सारी रघु ने कौत्स को दे दी। वह सुवर्णराशि सुमेरुपर्वत के पास की पहाड़ी सी दिखाई पड़ रही थी जो इन्द्र के वज्र से अलग कर दी गई हो।

**English Translation :**—The whole of that glittering heap of gold which looked like one of Sumeru's adjoining hills detached by Indra's thunderbolt, and which was received from Kubera who was about to be attacked, was given to Kautsa.

**Purport in Sanskrit :**—रघोः संकल्पं ज्ञात्वा कुबेरः रात्रौ एव तद्गृहे सुवर्णराशिं ववर्ष, स च राशिः इन्द्रवज्रपातभ्रष्टः सुमेरोः प्रत्यन्तपर्वत इव देदीप्यमान आसीत्। रघुः सम्पूर्णम् तं राशिं कौत्साय दत्तवान्।

**Change of Voice :**—भूपतिना अभियास्यमानात् कुबेरात् लब्धः वज्रभिन्नः सुमेरोः पाद इव स भासुरहेमराशिः समस्त एव कौत्साय दिदिशे।

## Notes

1. भूपतिः—भुवः ( पृथिव्याः ) पतिः इति भूपतिः ( ष० त० ) अर्थात् राजा, the lord of the earth, *i.e.*, the king.
2. अभियास्यमानात्—अभिगमिष्यमाणात्, from him who was about to be attacked. अभि+या+लृट् कर्मणि शानच्।
3. कुबेरात्— *from Kubera.*
4. अभियास्यमानात् कुबेरात्—*from Kubera who was about to be attacked.*
5. लब्धम्—प्राप्तम्, *obtained*, लभ् + क्त।
6. भासुरहेमराशिम्—(1) भासुर - *shining, glittering,* भास् + घुरच् by the rule भञ्जभासमिदो घुरच् ( अष्टा०

(2) हेम—सुवर्ण, gold.
(3) राशि—heap

(a) भासुरं च तद् हेम इति भासुरहेम (कर्मधारय), shining gold. (b) भासुर हेम्नः राशिम् (ष० त०) heap of shining gold.

7. दिदेश—दत्तवान् gave.
8. कुबेरात् लब्धं भासुरहेमराशिं कौत्साय दिदेश—gave Kautsa the heap of glittering gold which he had obtained from Kubera.
9. समस्तम्—कृत्स्नम्, सम्पूर्णम्, all; this qualifies हेमराशिम्।
10. वज्रभिन्नं—वज्रेण (कुलिशेन) भिन्नं (खण्डितम्)—(तृ० त०), detached by Indra's thunderbolt. This qualifies सुमेरुपादम्।
11. सुमेरोः—of the mountain Sumeru.
12. पादम्—प्रत्यन्तपर्वतम्, skirt-hill, adjoining hill.

जनस्य साकेतनिवासिनस्तौ
द्वावप्यभूतामभिनन्द्यसत्त्वौ।
गुरुप्रदेयाधिकनिःस्पृहोऽर्थी
नृपोऽर्थिकामादधिकप्रदश्च ॥ ३१ ॥

सञ्जी० तावुभावपि साकेतनिवासिनोऽयोध्यावासिनः 'साकेतः स्यादयोध्यायां कोशला नन्दिनी च सा' इति [illegible] जनस्याभिनन्द्यसत्त्वौ श्लाघ्यव्यवसायावभूताम् '[illegible] [illegible] [illegible]' इत्यमरः [illegible]। गुरुप्रदेया[illegible]

निःस्पृहोऽर्थी। अर्थिकामादर्थिमनोरथादधिकं प्रददातीति तयोक्तः "प्रे दाज्ञ·" इति कप्रत्ययः। नृपश्च।

Prose Order :—तौ द्वौ अपि साकेतनिवासिनः जनस्य अभिनन्द्यसत्त्वौ अभूताम्। गुरुप्रदेयाधिकनिःस्पृहः अर्थी अर्थिकामाद् अधिकप्रदः नृपः च।

Hindi Translation :--जितना गुरु को देना था उससे ज्यादा याचक ( कौत्स ) लेना ही नहीं चाहता था, और राजा ( रघु ) उसे उसकी इच्छा से भी अधिक देने को तैयार थे, ( यह देख कर ) अयोध्या के रहने वाले लोगों ने उन दोनों के चित्त की उदारता की ( बड़ी ) सराहना की।

English Translation :—Both of them, the suitor who did not like to accept more than what was to be given to his preceptor, and the king who was ready to give more than was demanded by the suitor, were praised for the greatness of their mind by the people residing in Saketa (Ayodhya).

Purport in Sanskrit :—'नाहं गुरुदक्षिणातः' अधिकतरं द्रव्यं ग्रहीष्ये' इति निर्बन्धं कृतवान्; रघुस्तावत् कौत्साय सम्पूर्णमेव तं सुवर्णराशिं दातुं कृतसङ्कल्प आसीत्। एवं कौत्सस्य निःस्वार्थभावं रघोश्चौदार्यं दृष्ट्वा सर्वे अयोध्यावासिनः साश्चर्यम् उभयोरेव प्रशंसां चक्रुः।

Change of Voice :—ताभ्यां द्वाभ्याम् अपि साकेतनिवासिनः जनस्य अभिनन्द्यसत्त्वाभ्याम् अभूयत, गुरुप्रदेयाधिकनिःस्पृहेण अर्थिना अर्थिकामाद् अधिकप्रदेन नृपेण च।

धामीनां घडवानां च शतैर्वाहितार्थं प्रापितधनमानतपूर्वकायम् विनयनम्रमित्यर्थः। प्रजेश्वरं रघुं करेण स्पृशन्वाचमुवाच।

Prose Order :—अथ प्रीतमना महर्षिः कौत्सः सम्प्रस्थितः (सन्) उष्ट्रवामीशतवाहितार्थम् आनतपूर्वकायम् प्रजेश्वरं करेण स्पृशन् वाचम् उवाच।

Hindi Translation :—अपना सारा द्रव्य सैकड़ों ऊँटों और खच्चरों से भेजवा कर राजा ने अपने शरीर का अगला हिस्सा झुका लिया। महर्षि कौत्स ने चलते समय राजा को हाथ से छूकर, प्रसन्न मन होकर यह बात कही।

English Translation :—Then while departing, the great sage Kautsa, delighted in mind, touched the king with his hand and addressed him thus, when the latter, having caused his wealth to be conveyed by hundreds of camels and mares, stood with the forepart of his body bent low b. fore him.

Purport in Sanskrit :—यदा रघुः स्वकीयं सम्पूर्णं धनं वरतन्तोः पार्श्वे सम्प्रेष्य शिरसा प्रणम्य कौत्सस्य सम्मुखे अतिष्ठत् तदा कौत्सः प्रसन्नेन चेतसा तं करेण स्पृष्ट्वा इत्थमवोचत्।

Change of Voice :—अथ प्रीतमनसा महर्षिणा कौत्सेन सम्प्रस्थितेन (सता) उष्ट्रवामीशतवाहितार्थम् आनतपूर्वकायं प्रजेश्वरं करेण स्पृशता वाक् ऊचे।

## Notes.

1. प्रीतमनाः—प्रीतं (प्रसन्नं) मनः यस्य तथोक्तः सन् (बहु०), one whose mind was delighted *i.e.*, becoming delighted.

(a) गुरवे प्रदेयम् इति गुरुप्रदेयम् ( च० त० ) that which was to be given to the Guru.

(b) गुरुप्रदेयात् अधिकम् इति गुरुप्रदेयाधिकम् ( पं० त० ) more than what was to be given to the Guru.

(c) गुरुप्रदेयाधिकस्य निःस्पृहः ( ष० त० ) one who had no desire for more than what was to be given to the Guru.

9. अर्थी —अर्थः (प्रयोजनं) विद्यते यस्य इति अर्थी, needy, suitor.

10. गुरुप्रदेयाधिकनिःस्पृहः अर्थी the suitor who did not want to have more than what was to be given to the Guru.

11. अर्थिकामात्—अर्थिनः ( याचकस्य ) कामात् ( चतुर्दशकोटिरूपात् ), than the desire of the suit.

12. अधिकप्रदः—अधिकं प्रददाति इतिप्रदः giver, one who was giving प्र + दा + क ( आतश्चोपसर्गे ) अधिकस्य प्रदः इति अधिकप्रदः ( ष० त० ), one who was giving more.

13. अर्थिकामाद् अधिकप्रदः—one who was giving more than the suitor demanded.

14. नृपः—नॄन् पाति इति नृपः अर्थात् राजा King.

अथोष्ट्रवामीशतवाहितार्थं
प्रजेश्वरं प्रीतमना महर्षिः ।
स्पृशन्करेणानतपूर्वकायं
संप्रस्थितो वाचमुवाच कौत्सः ॥ ३२ ॥

सञ्जी० । अथ प्रीतमना महर्षिः कौत्सः संप्रस्थितः प्रस्थास्यमानः " आशंसायां भूतवच्च " इति भविष्यदर्थे क्तः। उष्ट्राणां कमेलकानां

2. महर्षिः कौत्सः—the great sage Kautsa.
3. सम्प्रस्थितः—प्रस्थास्यमानः सन् while departing, while starting, सम् + प्र + स्था + क्त ।
4. उष्ट्रवामीशतवाहितार्थम्—(1) वाहितः ( प्रापितः, sent, conveyed) अर्थः येन तम् वाहितार्थम् ( बहु० ), him who caused his wealth to be conveyed. (2) उष्ट्राणां (camels) वामीनां ( बडवानां mares) शतैः वाहितार्थम्, him who caused his treasury to be conveyed by hundreds of camels and mares This qualifies प्रजेश्वरम् ।
5. आनतपूर्वकायम्—आनतः (bent) पूर्वकायः यस्य तम् ( बहु० ) him whose forepart of the body was bent. This also qualifies प्रजेश्वरम् ।
6. प्रजेश्वरम्—प्रजानाम् ईश्वरम् ( ष० त० ) अर्थात् राजानम् ।
7. करेण—हस्तेन, with (his) hand.
8. स्पृशन्—touching. स्पृश् + शतृ ।
9. प्रजेश्वरं करेण स्पृशन्—touching the king with his hand.
10. वाचम्—speech, words.
11. उवाच—addressed.
12. वाचम् उवाच—spoke these words.

किमत्र चित्रं यदि कामसूर्भू-
र्वृत्ते स्थितस्याधिपतेः प्रजानाम् ।
अचिन्तनीयस्तु तव प्रभावो
मनीषितं द्यौरपि येन दुग्धा ॥ ३३ ॥

सञ्जी० । वृत्ते स्थितस्य । (न्यायेनार्जनमर्थस्य वर्धनं पालनं तथा । सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम् ।) इति कामन्दकः । तस्मिन्वृत्ते स्थितस्य प्रजानामधिपतेर्नृपस्य भूः कामान्सूत इति कामसूर्यदि 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्' । अत्र कामप्रसवने किं चित्रम् । न चित्रमित्यर्थः । किन्तु तव प्रभावो महिमा त्वचिन्तनीयः । येन त्वया द्यौरपि मनीषितमभिलषितं दुग्धा । दुहेर्द्विकर्मकत्वादप्रधाने कर्मणि क्तः । (प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ।) इति स्मरणात् ।

Prose Order :—वृत्ते स्थितस्य प्रजानाम् अधिपतेः भूः कामसूः (भवति) यदि अत्र किं चित्रम् । तव प्रभावः तु अचिन्तनीयः येन द्यौः अपि मनीषितम् दुग्धा ।

Hindi Translation :—जब राजा अपने धर्म में स्थित रहे, तब यदि पृथ्वी उसकी कामनाओं को पूर्ण करदे तो इस में क्या आश्चर्य है । तुम्हारा प्रभाव कोई भी नहीं समझ सकता क्योंकि तुमने आकाश से भी अपना मनोरथ दुह लिया ।

English Translation :—What wonder is there if the earth fulfils the desires of a king who stands within the proper course of conduct ? Incomprehensible is your influence, as you have fulfilled your desired object even from the heaven itself.

Purport in Sanskrit :—सदाचारे लग्नस्य राज्ञः कामान् पृथ्वी पूरयति यत् तत्र न किमपि आश्चर्यम्, एतत् तु मां विस्मयमावहति यत्त्वम् आकाशादपि स्वकीयमभीष्टं साधितवान्।

Change of Voice :—वृत्ते स्थितस्य प्रजानाम् अधिपतेः भुवा कामस्वा ( भूयते ) यदि अत्र केन चित्रेण ( भूयते ), तव प्रभावेण तु अचिन्तनीयेन ( भूयते ) य. ( त्वं ) दिवम् अपि मनीषितम् दुग्धवान्।

## Notes

1. वृत्ते – in the proper sphere of conduct.
2. स्थितस्य—of one who stands.

   वृत्ते स्थितस्य—*of one who stands in the proper sphere of conduct*; of one who abides by the rules of rightful conduct.

3. प्रजानाम् अधिपते :—of the lord of the subjects *i.e.*, of a king.

   वृत्ते स्थितस्य प्रजानाम् अधिपतेः—who abides by the rule of rightful conduct.

4. भूः—पृथ्वी , earth.
5. कामसूः—कामान् ( अभिलषितान् मनोरथान् ) सूते (पूरयति) इति कामसूः, one who fulfils the desires ; काम+सू+क्विप्।
7. After the word कामसूः, the word भवति may be added while putting the verse in prose order,

so that भूः कामदुः ( भवति ) यदि will mean 'if the earth becomes the fulfiller of objects'

8. अत्र—अस्मिन् विषये, कामप्रसवने, in this, *i. e.*, in matter of the fulfilment of objects.

9. किं चित्रम्—किम् आश्चर्यम्, what is the wonder?

10. तव—your.

11. प्रभावः—power, majesty, influence.

12. अचिन्तनीयः—न चिन्तनीयः इति अचिन्तनीयः (नञ् तत्पुरुष), नञ् + चिन्त + अनीयर्, cannot be comprehended; incomprehensible.

13. येन—त्वया, by whom *i.e.*, by you.

14. द्यौः—स्वर्गः; आकाशम्, heaven or sky.

15 मनीषितम्—अभिलाषः, desire. ( मनसः ईषितम् इति मनीषितम् ) : ग ।

16 दुग्धा—(was) milked.

According to the rule गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् । विभक्तिः प्रथमा ईया द्वितीया च तदन्यतः— the गौण कर्म (secondary object) *viz.* the heaven has been placed in प्रथमा whereas the primary object, *viz.* मनीषितम् is still in the accusative case.

आवास्यमन्यत्पुनरुक्तभूतं
श्रेयांसि सर्वाण्यधिजग्मुषस्ते ।
पुत्रं लभस्वात्मगुणानुरूपं
भवन्तमीड्यं भवतः पितेव ॥ ३४ ॥

मल्लि० । सर्वाणि श्रेयांसि शुभान्यधिजग्मुषः प्राप्तवतस्ते तव आशीरन्यत् [illegible]

सर्वं सिद्धमित्यर्थः किं त्वीड्यं स्तुत्यं भवन्तं भवतः पितेवात्मगुणा-नुरूपम् त्वया तुल्यगुणमित्यर्थः । पुत्रं लभस्व प्राप्नुहि ।

**Prose Order** :—सर्वाणि श्रेयांसि अधिजग्मुषः ते अन्यत् आशास्यम् पुनरुक्तभूतम् । ईड्यं भवन्तं भवतः पिता इव आत्मगुणानुरूपम् पुत्रं लभस्व ।

**Hindi Translation** :—जब आप सभी मङ्गलकारी वस्तुएँ प्राप्त कर चुके हैं तो आपको दूसरा आशीर्वाद देना (एक ही बात का) दोहराना है। जैसे आप के पिता ने आप ऐसा प्रशंसनीय पुत्र पाया, उसी तरह आप भी अपने गुणों के सदृश एक पुत्र पावें।

**English Translation** :—Since you have (already attained all the blessed things, therefore any other benediction would be a (mere) repetition to you. May you therefore, get a praiseworthy son, suitable to your virtues, just as your father got a praiseworthy son in you.

**Purport in Sanskrit** :—भवता सकलाः सिद्धयः आदौ एव लब्धाः, अतः तासामेव प्राप्त्यर्थं तुभ्यम् आशीर्वाददानं चर्वितचर्वणमेव, केवलमिदमेवाशीर्वादं ददामि यद्भवान् सर्वगुण-सम्पन्नं स्वसदृशं सुतं लभताम् यथा भवतः पिता सर्वगुण-सम्पन्नं प्रशंसनीयं भवन्तं लब्धवान् ।

**Change of Voice** :—सर्वाणि श्रेयांसि अधिजग्मुषः ते अन्येन आशास्येन पुनरुक्तभूतेन ( भूयते ) भवतः पित्रा ईड्यः भवान् इव, आत्मगुणानुरूपः पुत्रः लभ्यताम् ।

इत्थं प्रयुज्याशिषमग्रजन्मा
राज्ञे प्रतीयाय गुरोः सकाशम् ।
राजापि लेभे सुतमाशु तस्मा-
दालोकमर्कादिव जीवलोकः ॥ ३५ ॥

सञ्जी० अग्रजन्मा ब्राह्मणः ' अग्रजन्मा द्विजे श्रेष्ठे भ्रातरि ब्रह्मणि स्मृतः' इति विश्वः । इत्थं राज्ञ आशिषं प्रयुज्य दत्वा गुरोः सकाशं समीपं प्रतीयाय प्राप राजाऽपि जीवलोको जीवसमूहः ' जीवः प्राणिनि गीष्पतौ' इति विश्वः । अर्कादालोकं प्रकाशमिव 'चैतन्यम्' इति पाठे ज्ञानम् तस्मादृषेराशु सुतं लेभे प्राप ।

Prose Order :—अग्रजन्मा इत्थं राज्ञे आशिषं प्रयुज्य गुरोः शकाशं प्रतीयाय । राजा अपि जीवलोकः अर्कात् आलोकम् इव तस्माद् आशु सुतं लेभे ।

Hindi Translation :—इस प्रकार ब्राह्मण राजा को अशीर्वाद देकर गुरु के समीप गया । जिस प्रकार संसार सूर्य से रोशनी पाता है उसी प्रकार राजा ने भी उससे शीघ्र ही पुत्र पाया ।

English Translation :—Having thus given a blessing to the King, the *Brahmana* went back to his preceptor. The king, too, got a son from him even as the world of living beings receives light from the sun.

Purport in Sanskrit :—कौत्सः इत्थं रघवे आशीर्वादं दत्त्वा स्वगुरोः समीपं प्रतिजगाम । यथा संसारः सूर्यात् प्रकाशं लभते तथैव ऋषेः कौत्सात् राजाऽपि शीघ्रं सुतमेकं लब्धवान् ।

Change of Voice :—अग्रजन्मना इत्थं राज्ञे आशिषं प्रयुज्य गुरोः सकाशं प्रतीये। राज्ञा अपि जीवलोकेन अर्काद् आलोकः इव तस्माद् आशु सुतः लेभे।

## Notes.

1. अग्रजन्मा—ब्राह्मणः, Brahman, see notes under verse 26.
2. इत्थम्—एवम्, अनेन प्रकारेण, पूर्वोक्तप्रकारेण, in this manner, thus; इदम्+थमु।
3. राज्ञे—नृपाय, रघवे।
4. आशिषम्—आशीर्वादं, benediction.
5. प्रयुज्य—दत्वा, having given, having conferred, प्र+युज+ल्यप्।
6. गुरोः—वरतन्तोः।
7. सकाशम्—समीपम्, near.
8. प्रतीयाय—प्राप, reached; प्रति+इ+लिट्।
9. जीवलोकः जीवानां (प्राणिनां) लोकः इव (प० त०) like the world of living beings.
10. अर्कात्—सूर्यात्, from the sun.
11. आलोकम्—प्रकाशम्, light.
12. तस्मात्—कौत्सात्, from Kautsa.
13. आशु—शीघ्रम्, soon.
14. सुतम्—पुत्रम्, son.
15. लेभे—प्राप्तवान्, got.

ब्राह्मे मुहूर्ते किल तस्य देवी
कुमारकल्पं सुषुवे कुमारम् ।
अतः पिता ब्रह्मण एव नाम्ना
तमात्मजन्मानमजं चकार ॥ ३६ ॥

सञ्जी० । तस्य रघोर्देवी महिषी ब्राह्मे "तस्येदम्" इत्यण् । ब्रह्मदेवतार्केऽभिजिन्नामके मुहूर्ते किलेषदसमाप्तं कुमारं कुमारकल्पं स्कन्दसदृशम् "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" इत्यनेन कल्पप्रत्ययः । कुमारं पुत्रं सुषुवे 'कुमारो बालके स्कन्दे' इति विश्वः । अतो ब्राह्ममुहूर्तोत्पन्नत्वात्पिता रघुर्ब्रह्मणो विधेरेव नाम्ना तमात्मजन्मानं पुत्रमजमजनामकं चकार । 'अजो हरौ हरे कामे विधौ छागे रघोः सुते' इति विश्वः ।

**Prose Order** :—तस्य देवी ब्राह्मे मुहूर्ते किल कुमारकल्पं कुमारं सुषुवे । अतः पिता ब्रह्मणः एव नाम्ना तम् आत्मजन्मानम् अजं चकार ।

**Hindi Translation** :—ब्राह्म मुहूर्त में उसकी रानी के स्वामिकार्तिक के समान पुत्र उत्पन्न हुआ । इसलिए पिता ने ब्रह्म ही के नाम से अपने उस लड़के का नाम अज रक्खा ।

**English Translation** :—In the Brahma moment his queen gave birth to a son who resembled Kartikeya (himself). Therefore, the father named his son Aja after the name of Brahma himself.

**Purport in Sanskrit** :—परमशुभे ब्राह्मे मुहूर्ते रघोः महिषी कार्तिकेयतुल्यं पुत्रम् उत्पादितवती । अस्मात् कारणात् रघुः

स्वपुत्रस्य 'अजः' इति नाम चक्रे यतः ब्रह्मणोऽपि 'अजः' इति नाम भवति।

Change of Voice :—तस्य देव्या ब्राह्मे मुहूर्ते किल कुमारकल्पः कुमारः सुषुवे। अतः पित्रा ब्रह्मणः एव नाम्ना सः आत्मजन्मा अजः चक्रे।

## Notes.

1. तस्य—रघोः, Raghu's.
2. देवी—महिषी, queen.
3. ब्राह्मे मुहूर्ते—in the quarter of Brahma. This quarter is called ब्राह्म for its presiding deity is ब्रह्मा (ब्रह्मणः इदम् इति ब्राह्मम्)—रात्रेश्च पश्चिमो यामो मुहूर्तो ब्राह्म उच्यते।
4. कुमारकल्पम्—कुमार means स्वामिकार्तिकः कुमाराद् ईषद्समाप्तः इति कुमारकल्पः अर्थात् स्वामिकार्तिकसदृशः like Swamikartika. (ईषद्समाप्तौ कल्पब्देश्यदेशीयरः)।
5. कुमारम्—पुत्रम् son.
6. सुषुवे—जनयामास, उत्पादितवती produced, gave birth to.
7. अतः—अस्मात्कारणात्, ब्राह्ममुहूर्तोत्पन्नत्वात् therefore, for the reason that the boy was born in the quarter of ब्रह्मा।
8. पिता—रघुः।
9. ब्रह्मणः—विधेः, of Brahma.
10. नाम्ना—अभिधेयेन, by the name (after the n...

English Translation :—The illustrious form was the same, the prowess the same, the natural large heartedness the same. The prince did not differ from his father, just as a lamp lighted from another lamp does not differ from it.

Purport in Sanskrit :—यथा कस्माच्चिद्दीपाद् उत्पादितः अपरो दीपः स्वोत्पादकात् पूर्वदीपात् स्वरूपतो न किञ्चिदपि भिद्यते, तथा सः बालोऽपि गुणेन, रूपेण स्वजनकाद् रघोः किंचिदपि न विभिदे ।

Change of Voice :—ओजस्विना रूपेण तेन एव (अभूयत), वीर्येण तेनैव ( अभूयत ), नैसर्गिकेण उन्नतत्वेन तेन एव ( अभूयत ) । कुमारेण प्रवर्तितेन दीपेन प्रदीपाद् इव स्वात्कारणात् न विभिदे ।

## Notes.

1. ओजस्वि—ओजः (तेजः ) विद्यते अस्य इति ओजस्वि अर्थात् तेजस्वि, resplendent or strong. Mallinatha translates it by तेजस्वि बलिष्ठं वा ( ओजस्तेजसि धातूनामवष्टम्भप्रकाशयोः । ओजो बले च दीप्तौ च ) ।

2. रूपम्—वपुः, form.

3. तद् एव—पैतृकम् एव, the very same of the father himself.

4. वीर्यम्—शौर्यम् , valour, prowess.

5. नैसर्गिकम् —स्वाभाविकम्, natural.

6. उन्नतत्वम्—औन्नत्यं, शरीरौन्नत्यं, चित्तौदार्यं वा, bodily stature or high-mindedness.

7. कुमारः—अजः, Aja.

8. प्रवर्तितः—उत्पादितः, lighted, प्र+वृत्+णिच्+क्त।

9. स्वात्—स्वकीयात्

10. कारणात्—from (his) source, *i. e.*, from his father.

11. न विभिदे—न भिन्नो बभूव, did not differ.

उपात्तविद्यं विधिवद्गुरुभ्य-
स्तं यौवनोद्भेदविशेषकान्तम्।
श्रीः साभिलाषापि गुरोरनुज्ञां,
धीरेव कन्या पितुराचकाङ्क्ष ॥३८॥

सञ्जी० । गुरुभ्यो विधिवद्यथाशास्त्रमुपात्तविद्यं लब्धविद्यम् यौवनस्योद्भेदादाविर्भावाद्धेतोर्विशेषेण कान्तं सौम्यं तमजं प्रति साभिलाषापि श्रीः धीरा स्थिरोन्नतचित्ता 'स्थिरा चित्तोन्नतिर्या तु तद्धैर्यमिति संज्ञितम्' इति भूपालः। कन्या पितुरिव गुरोरनुज्ञामाचकाङ्क्षेयेष। यौवराज्यार्होऽभूदित्यर्थः। अनुज्ञाशब्दात्पितृपारतन्त्र्यमुपमासामर्थ्यात्पाणिग्रहणयोग्यता च ध्वन्यते।

Prose Order :—गुरुभ्यः विधिवद् उपात्तविद्यं यौवनोद्भेदविशेषकान्तं तं साभिलाषा अपि श्रीः धीरा कन्या पितुः इव गुरोः अनुज्ञाम् आचकाङ्क्ष।

*Hindi Translation* :—जब अज आचार्यों से विधि-पूर्वक विद्या प्राप्त कर चुका, और युवावस्था के विकाश से अत्यन्त सुन्दर मालूम होने लगा, तब राजलक्ष्मी यद्यपि उसके लिये ( बहुत ) उत्सुक हुई, तथापि उसने अपने स्वामी

से आज्ञा पाने की प्रतीक्षा वैसे ही की जैसे विचारशीला कन्या पिता की आज्ञा पाने की प्रतीक्षा करती है।

**English Translation** :—The royal goddess of wealth, though she felt (great) longings for him when he had properly received education from his preceptors and looked very handsome on account of the development of youth, desired to receive permission from her master, even as a discreet daughter does from her father.

**Purport in Sanskrit** :—यदा अजः सकलाः विद्याः अधीतवान्, यदा चासौ तारुण्येन हेतुना कामं कमनीयो बभूव तदा राजलक्ष्मीः तस्य सकाशं गन्तुम् अत्यन्तम् उत्कण्ठिता बभूव। परन्तु यथा काचित् कुलीना विचारशीला कन्या स्वानुरूपं वरं मनसा वरीतवती अपि पितुराज्ञां प्रतीक्षते, तथैव अजस्य समीपे गन्तुकामापि राजलक्ष्मीः रघोः आज्ञां लब्धुम् प्रतीक्षितुमारेभे।

**Change of Voice** :—गुरुभ्यः विधिवद् उपात्तविद्यः यौवनोद्भेदविशेषकान्तः सः साभिलाषया अपि श्रिया धीरया कन्यया पितुः इव गुरोः अनुज्ञा आचकाङ्क्षे।

## Notes

1. गुरुभ्यः —अध्यापकेभ्यः, from (his) teachers.
2. उपात्तविद्यम्—उपात्ता ( प्राप्ता, लब्धा ) विद्या येन तम् ( बहु० ), him who had received education ; उपात्त= उप+आ+दा+क्त।
3. यौवनोद्भेदविशेषकान्तम्—(1) उद्भेद—आविर्भाव, apr

ance, manifestation, उत्+भिद्+घञ् (2) कान्तम्—सौम्यम्, charming.

(a) यौवनस्य उद्भेदः इति यौवनोद्भेदः ( ष० त० ), the appearance of youth, the growth of youth.

(b) विशेषेण कान्तम् इति विशेषकान्तम्, very handsome.

(c) यौवनोद्भेदात् विशेषकान्तम् इति यौवनोद्भेदविशेषकान्तम्, very handsome on account of the appearance of youth.

4. ताम् प्रति—अजं प्रति, towards Aja.

5. साभिलाषा – अभिलाषेण सह विद्यमाना ( बहु० ), desirous, eager.

6. श्रीः—राजलक्ष्मीः, goddess of royal wealth.

7. धीरा—स्थिरोन्नतचित्ता, firm and high minded ; स्थिरा चित्तोन्नतिर्यातु तद्धैर्यमिति संज्ञितम् ।

8. कन्या—daughter.

9. पितुः—जनकस्य, of (her) father.

10. अनुज्ञाम्—permission.

11. आचकाङ्क्ष—इयेष, desired.

The idea is that Aja's being installed as heir to the throne was dependent on his father's will. The simile shows that Aja had now attained a marriageable age.

अथेश्वरेण क्रथकैशिकानां
स्वयंवरार्थं स्वसुरिन्दुमत्याः ।
आप्तः कुमारानयनोत्सुकेन
भोजेन दूतो रघवे विसृष्टः ॥ ३९ ॥

मल्लि० । अथ स्वसुर्भगिन्या इन्दुमत्या स्वयंवरार्थं कुमारस्याजस्यानयने उत्सुकेन क्रथकैशिकानां विदर्भदेशानामीश्वरेण स्वामिना भोजेन राज्ञाप्तो हितो दूतो रघवे विसृष्टः प्रेषितः । क्रियामात्रयोगेऽपि चतुर्थी ।

Prose Order :—अथ स्वसुः इन्दुमत्याः स्वयंवरार्थं कुमारानयनोत्सुकेन क्रथकैशिकानाम् ईश्वरेण भोजेन आप्तः दूतः रघवे विसृष्टः ।

Hindi Translation :—इसके बाद क्रथकैशिकों के स्वामी भोज ने रघु के पास एक विश्वासपात्र दूत भेजा क्योंकि वह अपनी बहिन इन्दुमती के स्वयंवर के लिए कुमार अज को लाने के लिए ( बहुत ) उत्सुक थे ।

English Translation :—Then, a trustworthy messenger was sent to Raghu by Bhoja, lord of the Krathakaisikas, who was eager to bring the prince for the Swayamvara ceremony of his sister Indumati.

Purport in Sanskrit :—विदर्भदेशाधिपतिः भोजः स्वभगिन्याः स्वयंवरार्थम् कुमारम् आनेतुम् स्वविश्वासपात्रं दूतं रघोः समीपं प्रेषितवान् ।

Change of Voice :—अथ स्वसुः इन्दुमत्याः स्वयंवरार्थं कुमारानयनोत्सुकः क्रथकैशिकानाम् ईश्वरः भोजः आप्तं दूतं रघवे विसृष्टवान् ।

Notes

1. स्वसुः—भगिन्याः, of (his) sister.
2. स्वयंवरार्थम्—स्वयंवराय इति स्वयंवरार्थम्, for the sake of holding a Swayamvara.
3. कुमारानयनोत्सुकेन ( भोजेन )—कुमारः अर्थात् अजः ; आनयन—bringing ; उत्सुक— eager. (*a*) कुमारस्य आनयनम् इति कुमारानयनम् ( ष० त० the bringing of the prince. (*b*) कुमारानयने उत्सुकेन ( स० त० ) by one who was eager to bring the prince.
4. क्रथकैशिकानाम्—विदर्भदेशानाम् of the Vidarbhas
5. ईश्वरेण—स्वामिना by the lord.
6. क्रथकैशिकानाम् ईश्वरेण भोजेन—by Bhoja, the lord of the Vidarbhas.
7. आप्तः—हितः, विश्वसनीयः, faithful, trustworthy.
8. दूतः—messenger.
9. रघवे—रघोः सकाशम्, to Raghu.
10. विसृष्टः—प्रेषितः was sent वि+सृज्+क्त ।

तं श्लाघ्यसंबन्धमसौ विचिन्त्य
दारक्रियायोग्यदशं च पुत्रम् ।
प्रस्थापयामास ससैन्यमेनं
ऋद्धां विदर्भाधिपराजधानीम् ॥४०॥

सञ्जी० । असौ रघुस्तं भोजं श्लाघ्यसंबन्धमनूचानत्वादिगुणयोगात्स्पृहणीयसंबन्धं विचिन्त्य विचार्य पुत्रं च दारक्रियायोग्य-

दशं विवाहयोग्यवयसं विचिन्त्य ससैन्यमेनं पुत्रमृद्धां विदर्भाधिपस्य भोजस्य राजधानीं पुरीं प्रति प्रस्थापयामास। धीयतेऽस्यामिति धानी। "करणाधिकरणयोश्च" इत्यधिकरणे ल्युट्प्रत्ययः। राज्ञां धानीति विग्रहः।

Prose Order :—असौ तं श्लाघ्यसम्बन्धं विचिन्त्य पुत्रं च दारक्रियायोग्यदशं (विचिन्त्य) ससैन्यं एनम् ऋद्धां विदर्भाधिपराजधानीं प्रस्थापयामास।

Hindi Translation :—(रघु ने) यह सोच कर कि (भोज के साथ) सम्बन्ध हो जाना वाञ्छनीय ही है और यह सोच कर कि लड़के की भी अवस्था विवाह योग्य हो गई है—सेना के साथ अज को विदर्भनरेश की समृद्धिपूर्ण राजधानी को भेज दिया।

English Translation :—Thinking that he (Bhoja) was one with whom a connection was praiseworthy, and that his son too had become of a marriageable age, he sent him with an army to the prosperous capital of the lord of the Vidarbhas.

Purport in Sanskrit :—रघुः विचारयामास यद् भोजेन सह सम्बन्धस्थितिः अत्यन्तं वाञ्छनीया, पुत्रोऽपि मे विवाहयोग्यावस्थां प्राप्तः इति। अतएव सः अजं महत्या सेनया सार्धं विदर्भराजस्य राजधानीं प्रेषितवान्।

Change of Voice :—अमुना तं श्लाघ्यसम्बन्धं विचिन्त्य पुत्रं च दारक्रियायोग्यदशं (विचिन्त्य) ससैन्यः एषः ऋद्धां विदर्भाधिपराजधानीं प्रस्थापयामासे।

## Notes

1. असौ—रघुः ।
2. तम्—भोजम् ।
3. श्लाघ्यसम्बन्धम्=श्लाघ्यः ( प्रशंसनीयः ) सम्बन्धः यस्य तथोक्तम् ( बहु० ), such as the connection is praiseworthy of ; one of desirable connection.
4. विचिन्त्य—विचार्य, having thought, वि+चिन्त्+ल्यप् ।
5. दारक्रियायोग्यदशम्—दशा means age ; (1) दाराणां क्रिया इति दारक्रिया (तादर्थ्य षष्ठीसमासः) अर्थात् विवाहः, marriage.

   (2) तस्याः योग्या (fit) दशा ( अवस्था ) यस्य तथोक्तम् ( बहु० ) one whose age was fit for marriage, *i.e.*, one who was of a marriageable age ; who had attained to the marriageable age.
6. ससैन्यम्—सैन्यैः सह विद्यमानम् इति ससैन्यम् ( बहु० ), accompanied by an army.
7. ससैन्यम् एनम्—सेनयाऽनुगतं पुत्रम् ।
8. ऋद्धाम्—समृद्धाम्, prosperous, ऋध्+क+टाप् ।
9. विदर्भाधिपराजधानीम्—विदर्भाधिपस्य ( भोजस्य ) राजधानीम्, ( ष० त० ) to the capital of Bhoja. [ धीयतेऽस्यामिति धानी ; करणाधिकरणयोश्च इति अधिकरणे ल्युट् प्रत्ययः ; राज्ञां धानी इति राजधानी ।
10. प्रस्थापयामास—प्रेषयामास, sent.

since they had all kinds of entertainments furnished in royal tents and appeared to be non-forest-like on account of the presents of the village people.

Purport in Sanskrit :—अजस्य सुखप्रयाणाय राजपुरुषैः मार्गे अनेकानि निवासस्थानानि रचितानि । तत्र बहवो राजयोग्याः पटगृहाः निर्मापिता आसन् येषु विविधानि सुखशयनानि, स्वादुभक्ष्याणि, शीतलजलादीनि च परिकल्पितानि । एतैर्हेतुभिः कुमारस्य मार्गनिवासाः उद्यानविहारस्थानानीव ददृशिरे ।

Change of Voice :—उपकार्यारचितोपचारैः जानपदोपदाभिः वन्येतरैः तस्य मनुजेन्द्रसूनोः मार्गे निवासैः उद्यान विहारकल्पैः बभूवे

## Notes.

1. उपकार्यारचितोपचाराः—(1) उपकार्या means राजयोग्य पटभवन, royal tents (2) रचित—परिकल्पित arranged, रच्+क+ (3) उपचार—entertainments. Mallinatha translates the word उपचार by शयनादयः (beds etc.)

   (a) उपकार्यासु ( राजयोग्येषु पटभवनेषु रचिताः उपचाराः ( शयनादयः ) येषु ते ( बहु० ), those wherein entertainments were arranged (provided) in royal tents. This qualifies निवासाः ।

2. निवासाः—stations ( पड़ाव, टिकाव ) ।

3. उपकार्यारचितोपचाराः निवासाः the stations wherein entertainments were provided in royal tents;

*i.e.*, the halting stations abounded in magnificent tents inside which all sorts of entertainments were provided.

4. जानपदोपदाभिः—जनपदेभ्यः आगताः इति जानपदाः, जनपद्+अण् meaning the villagers; उपदा means उपायन, उपहार, presents ( भेंट ) ; जानपदानाम् उपदाभिः ( ष० त० ), by the presents of the villagers; on account of the presents of the villagers.

5. वन्येतराः—वने भवाः वन्याः sylvan, forest-like; वन्याः इतराः येषां ते ( बहु० ) अर्थात् अवन्याः, other than sylvan; non-forest-like.

6. जानपदोपदाभिः वन्येतराः निवासाः—the halting stations which looked non-forest-like on account of the presents brought by the villagers. The meaning is this :—stations were erected in forest-tracts and therefore they should have looked as those of a forest. But the rich presents which the villagers brought and offered to Aja, gave the tents an urban appearance—at any rate they did not at all look as being in a forest.

7. तस्य मनुजेन्द्रसूनोः—नृपपुत्रस्य अजस्य, राजकुमारस्य अजस्य, of prince Aja.

8. मार्गे निवासाः—the stations on the way, the way-halts, the halting places on the way.

9. उद्यानविहारकल्पाः—विहार means a place of amusement (1) उद्यानानि ( आक्रीडाः, उपवनानि, gardens )

since they had all kinds of entertainments furnished in royal tents and appeared to be non-forest-like on account of the presents of the village people.

Purport in Sanskrit :—अजस्य सुखप्रयाणाय राजपुरुषैः मार्गे अनेकानि निवासस्थानानि रचितानि । तत्र वहवो राजयोग्याः पटगृहाः निर्मापिता आसन् येषु विविधानि सुखशयनानि, स्वादुभक्ष्याणि, शीतलजलादीनि च परिकल्पितानि । एतैर्हेतुभिः कुमारस्य मार्गनिवासाः उद्यानविहारस्थानानीव ददृशिरे ।

Change of Voice :—उपकार्यारचितोपचारैः जानपदोपदाभिः वन्येतरैः तस्य मनुजेन्द्रसूनोः मार्गे निवासैः उद्यान विहारकल्पैः वभूवे

## Notes.

1. उपकार्यारचितोपचाराः—(1) उपकार्या means राजयोग्य पटभवन, royal tents (2) रचित—परिकल्पित arranged, रच्+क्त+ (3) उपचार—entertainments. Mallinatha translates the word उपचार by शयनादयः (beds etc.)

(a) उपकार्यासु ( राजयोग्येषु पटभवनेषु रचिताः उपचाराः ( शयनादयः ) येषु ते ( वहु० ), those wherein entertainments were arranged (provided) in royal tents. This qualifies निवासाः ।

2. निवासाः—stations ( पड़ाव, टिकाव ) ।

3. उपकार्यारचितोपचाराः निवासाः the stations wherein entertainments were provided in royal tents;

of the Narmada where the cool breezes shook the *Naktamala* trees, since it (the army) was fatigued and its banners were soiled with dust.

Purport in Sanskrit :—किञ्चिद्दूरं गत्वा कुमारो अजः नर्मदातीरं प्राप। तत्र नक्तमालनामकाः असंख्याताः वृक्षा अशोभन्त। जलकणैः स्पर्शात् शीतलो वायुः मन्दं मन्दं तान् वृक्षान् कम्पयामास। सेनाऽप्यजस्य श्रान्ताऽऽसीत्, तस्याः सर्वाः पताकाः धूलिधूसराः समजायन्त। अतः आनन्दप्रदमिमं प्रदेशं विलोक्य अजस्तत्रैव सेनां "अत्रैव तिष्ठत" इत्यादिदेश।

Change of Voice :—विलङ्घिताध्वना तेन सीकरार्द्रैः मरुद्भिः आनर्तितनक्तमाले नर्मदारोधसि क्लान्तं रजोधूसरकेतुसैन्यं निवेशयामासे।

## Notes

1. विलङ्घिताध्वा—विलङ्घितः (अतिक्रान्तः, passed over) अध्वा (मार्गः) येन सः, (बहु०), one who had travelled (some) distance *i.e.*, when he had gone some distance.

2. सीकरार्द्रैः—सीकर, means particles of water, sprays; सीकरैः आर्द्राः (क्लिन्नाः) इति सीकरार्द्राः (तृ० त०), तैः, by those which were charged with sprays, *i.e.*, by those which were cool.

3. मरुद्भिः—वायुभिः, by the breezes.

4. सीकरार्द्रैः मरुद्भिः— by the cool breezes.

इति शाश्वतः । प्रशस्तौ गण्डौ गण्डभित्ती " प्रशंसावचनैश्च " इति समासः । भित्तिशब्दः प्रशस्तार्थः । तथा च गणरत्नमहोदधौ ' मतल्लिकोद्घमिश्राः स्युः प्रकाण्डस्थलभित्तयः' इति । भित्तिः प्रदेशो वा ' भित्तिः प्रदेशो कुड्येऽपि ' इति विश्वः निर्धौतदानेनामला गण्डभित्तिर्यस्येति वा । वन्यो गजः सरित्तो नर्मदायाः सकाशात् पञ्चम्यास्तसिलप्रत्ययः उन्ममज्जान्वितः ।

Prose Order :—अथ उपरिष्टाद् भ्रमद्भिः भ्रमरैः प्राक् सूचितान्तःसलिलप्रवेशः निर्धौतदानामलगण्डभित्तिः वन्यः गजः सरित्त उन्ममज्ज ।

Hindi Translation :—उस समय नदी ( नर्मदा ) में से एक जंगली हाथी निकला । जहाँ उस हाथी ने जल के अन्दर प्रवेश किया था वहाँ जल के ऊपर भौंरे उड़ रहे थे, इससे (साफ़ साफ़ ) प्रकट होता था कि यहाँ कोई हाथी पहिले ही घुसा है मद के धुल जाने से उस हाथी के गण्डस्थल साफ़ दिखाई पड़ते थे ।

English Translation :—Then there came out of the river a wild elephant whose having entered inside the water already was indicated by the black bees that were hovering above and whose temple-walls had become clean since the ichor had been washed off.

Purport in Sanskrit :—नर्मदाजलपृष्ठे एकस्मिन् स्थाने मदजुगन्धाकृष्टाः षट्पदा भ्रमराः भ्रमन्तः आसन् ; एतेन इदं सूचितमभवत् यत् तत्र कश्चिद्गजः जलाभ्यन्तरे प्रविष्टोऽस्तीति किञ्चित्कालानन्तरमेव स गजो जलाभ्यन्तराद्निःससार । जलावगाहनेन तस्य कपोलौ स्वच्छावजायताम् ।

**Change of Voice** :—उपरिष्टाद्भ्रमद्भिः भ्रमरैः प्राक्सूचितान्तःसलिलप्रवेशेन निर्धौतदानामलगण्डभित्तिना वन्येन गजेन सरितः उन्ममज्जे।

## Notes.

1. उपरिष्टात्—उपरि, above.
2. भ्रमद्भिः—by those that were hovering, भ्रम्+शतृ तृ० वहु०, qualifying भ्रमरैः।
3. भ्रमरैः—by black bees.
   उपरिष्टात् भ्रमद्भिः भ्रमरैः— by black bees that were hovering above (the water ).
4. प्राक्—उन्मज्जनात् पूर्वं, before he emerged.
5. सूचितान्तःसलिलप्रवेशः—(1) सलिलस्य अन्तः इति अन्तःसलिलम्, inside the water.
   (2) अन्तःसलिलं प्रवेशः इति अन्तःसलिलप्रवेशः entrance inside the water.
   (3) प्राक्सूचितः अन्तः सलिलप्रवेशः यस्य ( वहु० ) one whose having entered inside the water already was indicated.

उपरिष्टाद् भ्रमद्भिः भ्रमरैः प्राक्सूचितान्तःसलिलप्रवेशः one whose having entered inside the water already was indicated by black bees that were hovering above the water. The idea is this : the black bees were hovering there above the surface of the water : this showed that some elephant had already entered inside the water. It was the fragrant smell of the

elephant which had attracted the black bees there.

6. निर्धौतदानामलगण्डभित्तिः—निर्धौत means प्रक्षालित, washed off : दान—मद, rut; अमल—स्वच्छ, clean ; गण्डभित्ती, कपोलौ, temple-walls.

(1) निर्धौतं दानं याभ्याम् ते निर्धौतदाने ( बहु० ) that from which the rut had been washed off. This, qualifies गण्डभित्ती ।

(2) निर्धौतदाने अतएव अमले ( विमले, स्वच्छे ) गण्डभित्ती यस्य सः ( बहु० ) he whose temple-walls had become clean on account of the rut being washed off from them.

(3) Mallinatha explains, गण्डभित्ति as प्रशस्तौ गण्डौ गण्डभित्ती । " प्रशंसावचनैश्च " इति समासः । भित्तिशब्दः प्रशस्तार्थः । तथा च गणरत्नमहोदधौ 'मतल्लिकोद्घमिश्राः स्युः प्रकाण्डस्थलभित्तयः । ' इति ।

7. वन्यः गजः—वने भवः वन्यः wild.वन्यः गजः wild elephant.

8. सरितः—नर्मदायाः, from the river, *i. e.*, from the Narmada : सरित्—तसिल् ।

9. उन्ममज्ज—उत्थितः, came out.

निःशेषविक्षालितधातुनापि
वप्रक्रियामृक्षवतस्तटेषु ।
नीलोर्ध्वरेखाशबलेन शंस-
न्दन्तद्वयेनाश्मविकुण्ठितेन ॥ ४४ ॥

सञ्जी० । कथंभूतो गजः । निःशेषविक्षालितधातुनाऽपि धौ
कादिनाऽपि नीलाभिरूर्ध्वाभी रेखाभिस्तटाभिघातजनिताभिः

कर्बुरेण 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः। अश्मभिः पाषाणैर्विकुण्ठितेन कुण्ठीकृतेन दन्तद्वयेन ऋक्षवान्नाम कश्चित्तत्रत्यः पर्वतः तस्य तटेषु वप्रक्रियां वप्रक्रीड़ां उत्खातकेलिमित्यर्थः 'उत्खातकेलिः शृङ्गाद्यैर्वप्रक्रीडा निगद्यते' इति शब्दार्णवः। संशन्कथयन् सूचयन्नित्यर्थः। युग्मम्।

Prose Order :—निःशेषविक्षालितधातुनाऽपि निलोर्ध्वरेखाशबलेन अश्मविकुण्ठितेन दन्तद्वयेन ऋक्षवतः तटेषु वप्रक्रियां शंसन्।

Hindi Translation :—यद्यपि उसके दोनों दाँतों से, जो कि चट्टान में टाकर मारने से गोंठिल हो गए थे, गेरू आदि धातुओं की धूलि बिल्कुल छूट गयी थी तथापि वे ऊपर गई हुई नीली रेखाओं से रङ्गीन दिखाई पड़ रहे थे। इन दाँतों से वह (हाथी) यह बात प्रकट कर रहा था कि उसने ऋक्षवान् पर्वत के ढाल पर वप्रक्रीडा खेली थी।

English Translation :—Indicating that he had enjoyed butting-sports (वप्रक्रिया) on the slope of the *Rikshavat* mountain by means of his two rock-blunted tusks which were variegated with blue lines pointing upwards, although the mineral dust was wholly washed off from them.

Purport in Sanskrit :—सलिलावगाहेन तस्य दन्तद्वयात् धातुरागः साकल्येन धौत आसीत्, अत एव 'अयं पर्वततटे वप्रक्रीडां कृतवान्, इति ज्ञातुं कोऽपि न शशाक। परन्तु तट-तटाघातात् विकुण्ठितमजायत, अतस्तद् दृष्ट्वा जना [illegible] आस्फालनस्य ऋक्षवतः पर्वतस्य तटेषु [illegible]वान् इति।

hange of Voice :—निःशेषविक्षालितधातुनाऽपि ........ शंसता ।

## Notes.

. निःशेषविक्षालितधातुना—निःशेषेण—wholly, completely; विक्षालित—धौत, washed off ; वि+क्षल्+क ; धातु—गैरिकादयः, mineral dust.

(1) निःशेषेण विक्षालिताः धातवः यस्मात् । ( बहु० ) that from which the mineral dust had been completely washed off. This qualifies दन्तद्वयेन ।

. निलोर्ध्वरेखाशबलेन—this also qualifies दन्तद्वयेन । नील-blue, ऊर्ध्वरेखाः—lines pointing upwards ; शबल—कर्बुर, variegated ; नीलाभिः ऊर्ध्वरेखाभिः शबलम्, तेन, that which looked (or was) variegated with blue lines pointing upwards. The idea is that the two tusks had become variegated on account of the blue lines that were made upon them in the course of his butting sports amongst the rocks.

3. अश्मविकुण्ठितेन—अश्मभिः ( पाषाणैः, with stones or rocks) विकुण्ठितेन ( कुण्ठीकृतेन ) तृ० त०, that which had been blunted by rocks. The idea is that he was sporting with his tusks amongst the rocks, therefore his tusks had been blunted.

4. दन्तद्वयेन— by the two tusks.

5. ऋक्षवतः तटेषु—on the slopes of the Rikshavat mountain.

6. वप्रक्रियाम्—वप्रक्रीडाम्, butting sports.
7. शंसन्—सूचयन्, कथयन्, indicating शंस्+शतृ प्रथमा एकवचन।
8. निःशेषविक्षालितधातुनाऽपि नीलोर्ध्वरेखाशबलेन अश्मविकुण्ठितेन दन्तद्वयेन वप्रक्रियां शंसन्—The mineral dust had been completely washed off from his tusks; thus there was no sign which could lead one to infer that the elephant had had any sports anywhere. Yet the blue lines made by his buttings against the rocks were present there all the same; also his tusks had become blunt. These two facts, at any rate, indicated that the elephant had had butting sports on the slopes of the Rikshavat mountain which was situated just on the bank of the Narmada

संहारविक्षेपलघुक्रियेण
हस्तेन तीराभिमुखः सशब्दम्।
बभौ स भिन्दन्बृहतस्तरङ्गा-
न्वार्यर्गलाभङ्ग इव प्रवृत्तः ॥ ४५ ॥

सञ्जी० । संहारविक्षेपयोः संकोचनप्रसारणयोर्लघुक्रियेण क्षिप्रव्यापारेण 'लघु क्षिप्रतरं द्रुतम्' इत्यमरः। हस्तेन शुण्डादण्डेन 'हस्तो नक्षत्रभेदे स्यात्करेभकरयोरपि' इति विश्वः। सशब्दं सघोषं बृहतस्तरङ्गान्भिन्दन्विदारयंस्तीराभिमुखः स गजः वारी गजबन्धनस्थानम् 'वारी तु गजबन्धनी' इति यादवः। वार्या अर्गलाया विष्कम्भस्य भङ्गे भञ्जने प्रवृत्त इव बभौ।

grass by means of his breast reached the bank afterwards, whereas the river-current reached it first since he had violently disturbed its waters.

Purport in Sanskrit :—पर्वतवद्विशालकायः स गजेन्द्रः यदा स्ववक्षःस्थलेन शैवलमञ्जरीणां समूहम् आकर्षन् तटं प्रति चलितुं प्रवृत्तस्तदा गजेन जलस्य क्षुब्धत्वात् नद्याः प्रवाहः प्रथमं तीरं प्राप, स्वयं च गजेन्द्रः पश्चात्तीरं प्राप।

Change of Voice :—शैलोपमेन तेन शैवलमञ्जरीणां जालानि उरसा कर्षता पश्चात् तटः उत्ससर्पे, तदुत्पीडितवारिराशिना सरित्प्रवाहेण तु पूर्वम् ( एव ) तटः उत्ससर्पे।

## Notes.

1. शैलोपमः—शैलः ( पर्वतः ) उपमा यस्य सः ( बहु० ) qualifying सः गजः ; he who was comparable with a mountain *i. e.*, he who was as lofty as a mountain.
2. शैवलमञ्जरीणाम्—शैवल is a kind of grass that grows in rivers and streams. मञ्जरी—sprouts. शैवलानां मञ्जर्यः इति शैवलमञ्जर्यः तासाम् शैवलमञ्जरीणाम् ( ष० त० ) of the sprouts of *Shaivala* grass.
3. जालानि—समूहम्, heaps.
4. उरसा—वक्षःस्थलेन, with his breast.
5. कर्षन्—dragging, कृष्+शतृ प्रथमा एकवचन।
6. पश्चात्—afterwards.
7. तटम् उत्ससर्प—advanced towards the bank.

The elephant advanced towards the bank afterwards whereas the river-current went forth first.

8. तदुत्पीडितवारिराशिः—(1) उत्पीडित—agitated, perturbed, disturbed, उत्+पीड+क्त ।

   (*a*) वारीणां ( जलानां ) राशयः इति वारिराशयः (ष० त० ) masses of water.

   (*b*) तेन उत्पीडिताः इति तदुत्पीडिताः ( तृ० त०) agitated by him.

   (*c*) तदुत्पीडिताः वारिराशयः यस्य सः ( बहु० ) qualifying सरित्प्रवाहः whose waters were agitated by him.

9. सरित्प्रवाहः—सरितः ( नद्याः ) प्रवाहः ( धारा ) इति सरित्प्रवाहः ( ष० त० ) river-current.

10. तदुत्पीडितवारिराशिः सरित्प्रवाहः—river-current whose waters were agitated by him (*i. e.*, the elephant)

11. पूर्वम्—already, first.

तस्यैकनागस्य कपोलभित्त्यो-
र्जलावगाहक्षणमात्रशान्ता ।
वन्येतरानेकपदर्शनेन
पुनर्दिदीपे मददुर्दिनश्रीः ॥ ४७ ॥

सञ्जी० । तस्यैकनागस्यैकाकिनो गजस्य कपोलभित्त्योर्जलावगाहेन क्षणमात्रं शान्ता निवृत्ता मददुर्दिनश्रीर्मदवर्षलक्ष्मीर्वन्येतरेषां ग्राम्याणामनेकपानां द्विपानां दर्शनेन पुनर्दिदीपे प्रवृद्धे ॥ ४८ ॥

Prose Order :—तस्य एकनागस्य कपोलभित्त्योः जलावगाहक्षणमात्रशान्ता मददुर्दिनश्रीः वन्येतरानेकपदर्शनेन पुनः दिदीपे ।

**Hindi Translation** :—यद्यपि उस गजश्रेष्ठ के दोनों गण्ड-स्थलों की मदछटा जल में ( बड़ी देर तक ) डूबे रहने के कारण, शान्त हो गई थी तथापि जब उसने ( अनेकों ) पालतू हाथी देखे तब उसको यह छटा फिर से भमक उठी।

**English Translation** :—Though the splendour of the rut issuing out of the temple, of that chief of elephants had been pacified for a moment on account of his plunge into the water, it was excited again at the sight of the tame elephants

**Purport in Sanskrit** :—यद्यपि जले निमज्जनेन तस्य गण्डस्थलात् मदस्रावः क्षणमात्रं शान्तोऽभूत्तथापि यदाऽसौ रघुसेनागजेन्द्रानपश्यत् तदा तैस्सह योद्धुंपुनरप्युद्यतो बभूव। इत्थं शौर्यस्याविर्भावेन सह तस्य गण्डस्थलात् भूयोऽपि मद-इच्यवितुमारेभे।

**Change of Voice** :—तस्य एकनागस्य कपोलभित्त्योः जलावगाहक्षणमात्रशान्तया मददुर्दिनश्रिया वन्येतरानेकपदर्श-नेन पुनः दिदीपे।

## Notes

1. एकनागस्य—Mallinatha translates this by एकाकिनः गजस्य of a single elephant. Charitra-vardhana and Hemachandra say it means 'exceptionally huge, equal-less.'
2. कपोलभित्त्योः— In sloka 43 Mallinatha says प्रशस्तौ गण्डौ इति गण्डभित्ती। 'प्रशंसावचनैश्च' इति समासः। भित्तिशब्दः प्रशस्तार्थः। तथा च गणरत्न महोदधौ—'मतल्लि-कोद्घमिश्राः स्युः प्रकाण्डस्थलभित्तयः,' इति similarly प्रशस्तौ कपोलौ इति कपोलभित्ती, तयोः कपोलभित्त्योः, *i. e.*,

broad temple. It can also be analysed as कपोलौ एव भित्ती ( प्रदेशौ ) इति कपोलभित्ती अर्थात् कपोलप्रदेशौ तयोः, of the temples.

3. जलावगाहक्षणमात्रशान्ता—अवगाह means 'plunge.'
   (a) जले अवगाहः इति जलावगाहः ( स० त० ) plunge into the water.
   (b) क्षणः मात्रा ( प्रमाणम् ) अस्य कालस्य इति क्षणमात्रः ।
   (c) क्षणमात्रं शान्ता इति क्षणमात्रशान्ता ( द्वि० त० ) pacified for a moment.
   (d) जलावगाहेन क्षणमात्रशान्ता इति जलावगाहक्षणमात्रशान्ता ( तृ० त० ), pacified for a moment by his plunge into the water.
4. मददुर्दिनश्रीः —दुर्दिन means वर्षम्, rain.
   (a) मदस्य दुर्दिनम् इति मददुर्दिनम् ( ष० त० ) shower of rut.
   (b) मददुर्दिनस्य श्रीः इति मददुर्दिनश्रीः ( ष० त० ) मदवर्षणच्छटा, splendour of the shower of rut.
5. वन्येतरानेकपदर्शनेन—अनेकप means गज, elephant अनेकाभ्यां पिबति इति अनेकपः, he who drinks with more than one ; the elephant drinks water with his trunk which has two holes ; thus he drinks water with more than one.
   (a) वन्यात् इतरे इति वन्येतरे ( पं० त० ), other than the wild i. e., domestic, tame.
   (b) वन्येतरे च ते अनेकपाः इति वन्येतरानेकपाः ( कर्मधारय ) tame elephants.

(c) नन्येतरानेकरस्य दर्शनेन इति वन्येतरानेकपदर्शनेन ( प० त० ), at the sight of tame elephants.

6. पुनः—again.

7. दिदीपे—shone forth.

सप्तच्छदक्षीरकटुप्रवाह-
मसह्यमाघ्राय मदं तदीयम् ।
विलङ्घिताधोरणतीव्रयत्नाः
सेनागजेन्द्रा विमुखा बभूवुः ॥ ४८ ॥

सञ्जी० । सप्तच्छदस्य वृक्षविशेषस्य क्षीरवत्कटुः सुरभिः प्रवाहः प्रसारो यस्य तम् । 'कटुतिक्तकषयास्तु सौरभ्येऽपि प्रकीर्तिताः' इति यादवः । असह्यं तदीयं मदमाघ्राय सेनागजेन्द्राः विलङ्घितस्तिरस्कृत आधोरणानां हस्तिपकानां तीव्रो महान्यत्नो यैस्ते तथोक्ताः सन्तः 'आधोरणा हस्तिपका हस्त्यारोहा निषादिनः' इत्यमरः । विमुखाः पराङ्मुखाः बभूवुः ।

Prose Order :—सप्तच्छदक्षीरकटुप्रवाहम् असह्यं तदीयं मदम् आघ्राय सेनागजेन्द्राः विलङ्घिताधोरणतीव्रयत्नाः ( सन्तः ) विमुखा बभूवुः ।

Hindi Translation :—उसके मद में सप्तच्छद वृक्ष के दूध के समान कड़ी तथा असह्य महक भरी थी ; इसलिए सेना के ( सारे ) हाथी, महावतों के घोर यत्नों की अवहेलना कर के, भाग चले ।

**English Translation** :—Having smelt his unbearable rut the flow of which was as strong-smelling as the milky exudation of the *Saptachchhada* tree, the elephants of (Raghu's)

army fled away, disregarding the vigorous efforts of their drivers.

Purport in Sanskrit :—रघुसेनागजेन्द्राः तस्य वन्यगजस्य सप्तच्छदक्षीरवत्सुगन्धयुक्तं मदम् आघ्राय उन्मत्ता बभूवुः। तस्मिन् समये यद्यपि हस्तिपकाः तान् निवारयितुं महान्तं प्रयत्नं चक्रुस्तथापि ते पलायाञ्चक्रिरे।

Change of Voice :—सप्तच्छदक्षीरकटुप्रवाहम् असह्यं तदीयं मदम् आघ्राय सेनागजेन्द्रैः विलङ्घिताधोरणतीव्रयत्नैः (सद्भिः) विमुखैः बभूवे।

## Notes.

1. सप्तच्छदक्षीरकटुप्रवाहम्—कटु means bitter, but Mallinatha says कटुः सुरभिः (fragrant). सप्तच्छद is a tree from the bark of which there issues out a milky exudation which smells fragrant.

   (a) सप्तच्छदस्य वृक्षविशेषस्य क्षीरम् इति सप्तच्छदक्षीरम् (ष० त०)।

   (b) सप्तच्छदक्षीरवत् कटुः (सुरभिः) प्रवाहः (प्रसारः) यस्य (बहु०) तं सप्तच्छदक्षीरकटुप्रवाहम् qualifying मदम् it means the rut of which the flow was fragrant like the milk of the Saptachchhada tree.

2. असह्यम्—unbearable.
3. तदीयम् मदम्—नागस्य मदम् the rut of the elephant.
4. आघ्राय—घ्रात्वा having smelt, आ+घ्रा+ल्यप्।
5. सेनागजेन्द्राः—सेनायाः गजेन्द्राः (ष० त०) the elephants of the army.
6. विलङ्घिताधोरणतीव्रयत्नाः—(a) तीव्राः यत्नाः इति तीव्रयत्नाः (कर्मधा०) vigorous efforts.

(c) वन्येतरानेकरस्य दर्शनेन इति वन्येतरानेकपदर्शनेन ( ष० त० ), at the sight of tame elephants.

6. पुनः—again.
7. दिदीपे—shone forth.

सप्तच्छदक्षीरकटुप्रवाह-
मसह्यमाघ्राय मदं तदीयम् ।
विलङ्घिताधोरणतीव्रयत्नाः
सेनागजेन्द्रा विमुखा बभूवुः ॥ ४८ ॥

सञ्जी० । सप्तच्छदस्य वृक्षविशेषस्य क्षीरवत्कटुः सुरभिः प्रवाहः प्रसारो यस्य तम् । 'कटुतिक्तकषायास्तु सौरभ्येऽपि प्रकीर्तिताः' इति यादवः । असह्यं तदीयं मदमाघ्राय सेनागजेन्द्राः विलङ्घितस्तिरस्कृत आधोरणानां हस्तिपकानां तीव्रो महान्यत्नो यैस्ते तथोक्ताः सन्तः 'आधोरणा हस्तिपका हस्त्यारोहा निषादिनः' इत्यमरः । विमुखाः पराङ्मुखाः बभूवुः ।

Prose Order :—सप्तच्छदक्षीरकटुप्रवाहम् असह्यं तदीयं मदम् आघ्राय सेनागजेन्द्राः विलङ्घिताधोरणतीव्रयत्नाः (सन्तः) विमुखा बभूवुः ।

Hindi Translation :—उसके मद में सप्तच्छद वृक्ष के दूध के समान कड़ी तथा असह्य महक भरी थी ; इसलिए सेना के ( सारे ) हाथी, महावतों के घोर यत्नों की अवहेलना कर के, भाग चले ।

English Translation :—Having smelt his unbearable rut the flow of which was as strong-smelling as the milky exudation of the *Saptachchhada* tree, the elephants of (Raghu's)

tumultuous confusion in the encampment : the horses in it all fled away having broken their bonds; the chariots fell to the ground on account of their axles being broken; and the warriors got confused in protecting the ladies.

**Purport in Sanskrit** :—तस्य भयात् अश्वाः स्वबन्धनानि छित्त्वा पलायामासुः। रथानां युगकीलकाः त्रुटिताः अतस्ते पृथिव्यामपतन्। योधाश्च सर्वे स्त्रीणां रक्षणे व्यग्रा बभूवुः। इत्थं सः क्षणेनैव अखिलं सेनानिवेशं व्याकुलीचकार।

**Change of Voice** :—तेन छिन्नबन्धद्रुतयुग्यशून्यः भग्नाक्षपर्यस्तरथः रामापरित्राणविहस्तयोधः सेनानिवेशः क्षणेन तुमुलः चक्रे।

## Notes.

1. छिन्नबन्धद्रुतयुग्यशून्यम्—युगं वहन्ति इति युग्याः अर्थात् वाहाः horses, oxen (1) छिन्ना बन्धाः यैस्ते छिन्नबन्धाः (बहु०) those who had broken their bonds द्रुत means पलायित, fled; (2) आदौ छिन्नबन्धाः पश्चात् द्रुताः इति छिन्नबन्धद्रुताः (कर्मधा०) those who had broken their bonds and then fled away : (3) छिन्नबन्धद्रुताश्च ते युग्याः इति छिन्नबन्धद्रुतयुग्याः (कर्मधा०), [illegible] who had broken their bonds and then had fled away : (4) छिन्नबन्धद्रुतयुग्यैः शून्यम् (तृ० त० [illegible]) that [illegible] was cleared of horses that had broken their bonds and then fled away.

2. भग्नाक्षपर्यस्तरथम्—[illegible] भग्न—broken, अक्ष—axle; पर्यस्त—पतित, [illegible], परि +

(*b*) आधोरणानां हस्तिपकानां तीव्रयत्नाः इति आधोरणतीव्रयत्नाः, the vigorous efforts of the drivers.

(*c*) विलङ्घिताः आधोरणतीव्रयत्नाः यैः ते ( बहु० ) those who set at nought the vigorous efforts of the drivers.

7. विमुखाः—पराङ्मुखाः, turning their backs.

स च्छिन्नबन्धद्रुतयुग्यशून्यं
भग्नाक्षपर्यस्तरथं क्षणेन ।
रामापरित्राणविहस्तयोधं
सेनानिवेशं तुमुलं चकार ॥४९ ॥

सञ्जी० । स गजः छिन्ना बन्धा यैस्ते छिन्नबन्धा द्रुताः पलायिताः युगं वहन्तीति युग्या वाहा यस्मिन्सः स चासौ शून्यश्च तम् । भग्ना अक्षा रथावयवदारुविशेषाः 'अक्षो रथस्यावयवे पाशकेऽप्यक्षमिन्द्रियम्' इति शाश्वतः । येषां ते भग्नाक्षा अत एव पर्यस्ताः पतिता रथा यस्मिंस्तम् । रामाणां स्त्रीणां परित्राणे संरक्षणे विहस्ता व्याकुलाः 'विहस्तव्याकुलौ समौ' इत्यमरः । योधा यस्मिंस्तं सेनानिवेशं शिविरं क्षणेन तुमुलं संकुलं चकार ।

**Prose Order** :—सः छिन्नबन्धद्रुतयुग्यशून्यम् भग्नाक्षपर्यस्तरथम् रामापरित्राणविहस्तयोधम् सेनानिवेशं क्षणेन तुमुलं चकार ।

**Hindi Translation** :—उस गजेन्द्र ने क्षण भर में सेना के शिविर को इस तरह व्याकुल कर दिया कि घोड़े अपना बन्धन तोड़ तोड़ कर भाग निकले, धुरियों के टूट जाने से रथ ( पृथ्वी पर ) गिर पड़े, और योधा लोग स्त्रियों की रक्षा करने में व्याकुल हो गए ।

**English Translation** :—In a moment he created a

प्रहरिष्यन् अत एव नात्यायतमनतिदीर्घं यथा स्यात् नञर्थस्य नशब्दस्य सुप्सुपेति समासः। कृष्टशार्ङ्ग ईपदाकृष्टचापः सन्विशिखेन वाणेन कुम्भे जघान । अत्र चानुपः—(लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यात् । इयं हि श्रीर्ये करिणः ) इति । अत एव ( युद्धादन्यत्र ) इति द्योतनार्थमेव वन्यग्रहणं कृतम्

Prose Order :—नृपतेः वन्यः करी अवध्यः इति श्रुतवान् कुमारः आपतन्तं तं निवर्तयिष्यन् नात्यायतकृष्टशार्ङ्गः विशिखेन कुम्भे जघान ।

Hindi Translation :—राजकुमार अज जानता था कि राजा को जंगली हाथी न मारना चाहिए. इसलिए उसने अपने बाण को बहुत दूर तक नहीं खींचा और उसे ( केवल ) लौटा देने की इच्छा से उसने उसके मस्तक में एक बाण मारा ।

English Translation :—The prince who was aware that a King should not kill a wild elephant, did not draw his bow to a great length, and (merely) desiring to make him turn back shot an arrow into the forehead of the elephant that was rushing (fast) towards him :—

Purport in Sanskrit :—वन्यो गजो राज्ञा न हन्तव्यः इति अजः प्रथमत एवाजानात् अतोऽसौ नैव तं प्राणैर्हन्तुमियेप । स तु 'अयमेतं प्रदेशं विहाय क्वचिद्दूरं व्रजेत् ' इत्येवैपिष्ट अतः कार्मुकम् अत्यायतम् अकृष्ट्वा वाणमेकं तस्य मस्तके चिक्षेप ।

Change of Voice :—नृपतेः वन्येन करिणा अवध्येन भूयते इति श्रुतवता कुमारेण आपतन्तं तं निवर्तयिष्यता कृष्टशार्ङ्गेण विशिखेन कुम्भे जघ्ने ।

## Notes

1. नृपतेः—राज्ञः, of a king.
2. वन्यः—wild ( वने भवः वन्यः )।
3. करी—गजः elephant
4. अवध्यः—न वध्यः इति अवध्यः ( नञ् तत्पु० not deserving to be killed.
5. श्रुतवान्—one who had heard, one who knew श्रु + क्तवतु ।
6. कुमारः—अजः
7. आपतन्तम्—अभिधावन्तम् him who was rushing towards him, आ + पत् + शतृ ।
8. तं—गजम्
9. निवर्तयिष्यन्—desiring to make him turn back, नि + वृत् + णिच् + लृट् शतृ ।
10. नात्यायतकृष्टशार्ङ्गः— (*a*) न अति आयतम् इति नात्यायतम् अर्थात् अनतिदीर्घम् (*b*) कृष्टम् शार्ङ्गं येन सः कृष्टशार्ङ्गः one who had drawn his bow (*c*) नात्यायतं कृष्टशार्ङ्गः इति नात्यायतकृष्टशार्ङ्गः ( सुप्सुपा ) one who had drawn his bow not to a great extent. The prince did not desire to kill the elephant, he only wanted to make him go back and therefore did not draw his bow to a great length.
11. विशिखेन—बाणेन, with an arrow.
12. कुम्भे— in the forehead.
13. जघान—shot. हन् + लिट्

स विद्धमात्रः किल नागरूप-
मुत्सृज्य तद्विस्मितसैन्यदृष्टः ।
स्फुरत्प्रभामण्डलमध्यवर्ति
कान्तं वपुर्व्योमचरं प्रपेदे ॥ ५१ ॥

सञ्जी० । स गजो विद्धमात्रस्ताडितमात्रः किल न तु प्रहतस्तथापि नागरूपं गजशरीरमुत्सृज्य तेन वृत्तान्तेन विस्मितैस्तद्विस्मितैः सैन्यैर्दृष्टः सन् स्फुरतः प्रभामण्डलस्य मध्यवर्ति कांतं मनोहरं व्योमचरं वपुः प्रपेदे प्राप ।

Prose Order :—सः विद्धमात्रः किल नागरूपम् उत्सृज्य तद्विस्मितसैन्यदृष्टः स्फुरत्प्रभामण्डलमध्यवर्ति कान्तं व्योमचरं वपुः प्रपेदे ।

Hindi Translation :—बाण के लगते ही उसने हाथी का रूप त्याग दिया । इस वृत्तान्त से आश्चर्ययुक्त हो कर सेना (उसे) देख ही रही थी कि उसने, आकाश में विचरण करने योग्य, रमणीक तथा प्रकाशमान प्रभामण्डल से वेष्टित, रूप धारण कर लिया ।

English Translation:—It is said, that as soon as he was wounded, he gave up his elephantine form and assumed a lovely figure which could move about in the sky and was surrounded by a flashing circle of light in the very seeing of the army which was astonished at this occurrence.

Purport in Sanskrit :—अजस्य बाणेन विद्धमात्रः एव स गजः नागदेहं विहाय गगनविहरणक्षमं तेजोयुक्तं दिव्यं स्वरूपं धारयामास । एतेन आश्चर्यवृत्तान्तेन सैनिका विस्मयाविष्टा बभूवुः ।

## Notes

1. नृपतेः—राज्ञः, of a king.
2. वन्यः—wild ( वने भवः वन्यः ) ।
3. करी—गजः elephant
4. अवध्यः—न वध्यः इति अवध्यः ( नञ् तत्पु० not deserving to be killed.
5. श्रुतवान्—one who had heard, one who knew श्रु + क्तवतु ।
6. कुमारः—अजः
7. आपतन्तम्—अभिधावन्तम् him who was rushing towards him, आ + पत् + शतृ ।
8. तं—गजम्
9. निवर्तयिष्यन्—desiring to make him turn back, नि + वृत् + णिच् + लृट् शतृ ।
10. नात्यायतकृष्टशार्ङ्गः— (*a*) न अति आयतम् इति नात्यायतम् अर्थात् अनतिदीर्घम् (*b*) कृष्टम् शार्ङ्गं येन सः कृष्टशार्ङ्गः one who had drawn his bow (*c*) नात्यायतं कृष्टशार्ङ्गः इति नात्यायतकृष्टशार्ङ्गः ( सुप्सुपा ) one who had drawn his bow not to a great extent. The prince did not desire to kill the elephant, he only wanted to make him go back and therefore did not draw his bow to a great length.
11. विशिखेन—बाणेन, with an arrow.
12. कुम्भे— in the forehead.
13. जघान—shot. हन् + लिट्

(3) तस्य मध्ये वर्तते इति स्फुरत्प्रभामण्डलमध्यवर्ति (उपपद सामास) it qualifies existing in the midst of a flashing circle of light.

9. कान्तम्—मनोहरम्, handsome, qualifying वपुः ।
10. व्योमचरम्—व्योम्नि चरति इति व्योमचरम् that which could move about in the sky, व्योमन्+चर+ट ।
11. वपुः —शरीरम् body.
12. प्रपेदे—प्राप, लेभे, gained, obtained.

अथ प्रभावोपनतैः कुमारं
कल्पद्रुमोत्थैरवकीर्य पुष्पैः ।
उवाच वाग्मी दशनप्रभाभिः
संवर्धितोरःस्थलतारहारः ॥५२ ॥

सञ्जी० । अथ प्रभावेनोपनतैः प्राप्तैः कल्पद्रुमोत्थैः कल्पवृक्षोत्पन्नैः पुष्पैः कुमारमजमवकीर्याभिवृष्य दशनप्रभाभिर्दन्तकांतिभिः संवर्धिता उरःस्थले ये तारहाराः स्थूला मुक्ताहारास्ते येन स तथोक्तः । वाचोऽस्य सन्तीति वाग्मी वक्ता । "वाचो ग्मिनिः" इति ग्मिनिप्रत्ययः स पुरुष उवाच ।

Prose Order :—अथ प्रभावोपनतैः कल्पद्रुमोत्थैः पुष्पैः कुमारम् अवकीर्य दशनप्रभाभि. संवर्धितोरःस्थलतारहारः वाग्मी उवाच ।

Hindi Translation : - इसके अनन्तर उसने अपने सामर्थ्य से कल्पवृक्ष के फूल लाकर अज के ऊपर वृष्टि की । फिर वह वक्ता अपने दाँतों की चमक से (अपने) हृदय पर पड़े हुए बड़े बड़े मोतियों के हार की शोभा बढ़ाता हुआ बोला ।

**Prose Order** :—अवलेपमूलात् मतङ्गशापात् मतङ्गजत्वम् अवाप्तवान् अस्मि मां प्रियदर्शनस्य गन्धर्वपतेः तनूजं प्रियंवदम् अवेहि ।

**Hindi Translation** :—मेरे गर्व के कारण मतङ्ग ऋषि ने मुझे शाप दिया था, इसी से मैंने हाथी का शरीर पाया था। मुझे प्रियदर्शन गन्धर्वराज का पुत्र समझिए ( मेरा नाम ) प्रियंवद है ।

**English Translation** :—" I obtained the state of an elephant on account of Matanga's curse which was brought about by my own arrogance. Know me to be Priyamvada, the son of Priyadarshan king of the Gandharvas."

**Purport in Sanskrit** :—पुराऽहम् अभिमानात् महर्षिं मतङ्गं तिरस्कृतवान्; तेन रुष्टो मुनिः मामभिशप्तवान् । अस्मादेव हेतोरहं गजत्वं प्राप्तोऽस्मि । मम प्रियंवद इति नाम विद्यते अहं गन्धर्वराजस्य प्रियदर्शनस्य सुतोऽस्मि ।

**Change of Voice** :—अवलेपमूलात् मतङ्गशापात् मतङ्गजत्वम् अवाप्तवता मया भूयते, त्वया अहं प्रियदर्शनस्य गन्धर्वपतेः तनूजः प्रियंवदः अवेयै ।

## Notes.

1. अवलेपमूलात्—अवलेप means गर्व, pride, arrogance अव+लिप्+घञ्; अवलेपो मूलं यस्य तस्मात् (बहु०) अवलेपमूलात् अर्थात् गर्वहेतुकात्, that which had for its source arrogance, that which was caused by ( my own) arrogance.

6. संयोक्ष्यसे— you will be united.
7. तपोनिधिः—तपसां निधिः (ष० त०) अर्थात् मतङ्गः, Matanga, the treasure of penances.

संमोचितः सत्त्ववता त्वयाऽहं
　　शापाच्चिरप्रार्थितदर्शनेन ।
प्रतिप्रियं चेद्भवतो न कुर्यां
　　वृथा हि मे स्यात्स्वपदोपलब्धिः ॥५६॥

सञ्जी० । चिरं प्रार्थितं दर्शनं यस्य तेन सत्त्ववता बलवता त्वयाऽहं शापात्संमोचितो मोक्षं प्रापितः । भवतः प्रतिप्रियं प्रत्युपकारं न कुर्यां चेन्मे स्वपदोपलब्धिः स्वस्थानप्राप्तिः 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः वृथा स्याद्धि । तदुक्तम्—( प्रतिकर्तुमशक्तस्य जीवितान्मरणं वरम् ) इति ।

Prose Order :—चिरप्रार्थितदर्शनेन सत्त्ववता त्वया शापात् संमोचितः ( अहं ) भवतः प्रतिप्रियं न कुर्यां चेत् ( तर्हि ) मे स्वपदोपलब्धिः वृथा स्यात् हि ।

Hindi Translation :—मैं चिरकाल से आपके दर्शन का अभिलाषी था । आप ( बड़े ) पराक्रमी हैं । आपने मुझे शाप से छुड़ा दिया, ( अब ) यदि मैं इसके बदले में आप का कुछ उपकार नहीं करता तो मेरा अपनी स्थिति का पाजाना व्यर्थ ही है ।

English Translation :—I have been released from the curse by you whose sight had been long desired by me and who are endowed with valour. If I do no good to you in return, my acquisition of my position is in vain.

**Purport in Sanskrit** :—तदाप्रभृत्यहं सुचिरं भवदागमनं प्रतीक्षमाणः अत्र अतिष्ठम्। भाग्येनाद्य आगत्य भवान् मां शापात् मोचितवान्। अतोऽहं यदि भवतः प्रत्युपकारं न कुर्याम्, तर्हि मे स्वस्थानप्राप्तिः वृथा स्यात्।

**Change of Voice** :—चिरप्रार्थितदर्शनेन सत्त्ववता त्वया शापात् संमोचितेन मया भवतः प्रतिप्रियं न क्रियते चेत् तर्हि मे स्वपदोपलब्ध्या वृथा भूयेत।

## Notes.

1. चिरप्रार्थितदर्शनेन—चिरं प्रार्थितं दर्शनं यस्य तेन ( बहु० ) by one whose sight had been long desired (by me).
2. सत्त्ववता—सत्त्वं ( बलं ) विद्यते अस्य इति सत्त्ववान् तेन बलवता, by one who possesses valour सत्त्व+मतुप् तृतीया qualifying. त्वया।
3. शापात्—from the curse.
4. संमोचितः—( अहं ). I who have been released, सम्+मुच्+णिच्+क्त।
5. भवतः—your.
6. प्रतिप्रियम्—प्रत्युपकारम्, good in return.
7. न कुर्यां चेत्—if I do not do.
8. ( तर्हि ) then.
9. स्वपदोपलब्धिः—स्वस्य पदम् ( स्थानम् ) इति स्वपदम् तस्य उपलब्धिः ( लाभः ) obtaining of my position उप+लभ्+क्तिन्।
10. वृथा स्यात्—is in vain.

संमोहनं नाम सखे ममास्त्रं
प्रयोगसंहारविभक्तमन्त्रम् ।
गान्धर्वमादत्स्व यतः प्रयोक्तु-
र्न चारिहिंसा विजयश्च हस्ते ॥ ५७ ॥

सञ्जी० । हे सखे ! सखिशब्देन समप्राणतोक्ता । यथोक्तम्—( अत्यागसहनो बन्धुः सदैवानुमतः सुहृत् । एकक्रियं भवेन्मित्रं समप्राणः सखा मतः ॥ ) इति । प्रयोगसंहारयोर्विभक्तमन्त्रं गान्धर्वं गन्धर्वदेवताकम् । संमोह्यतेऽनेनेति संमोहनं नाम ममास्त्रमादत्स्व गृहाण यतोऽस्त्रात्प्रयोक्तुरस्त्रप्रयोगिणोऽरिहिंसा न च विजयश्च हस्ते । हस्तगतो विजयो भवतीत्यर्थः ।

Prose Order :—( हे ) सखे ! प्रयोगसंहारविभक्तमन्त्रम् गान्धर्वं सम्मोहनं नाम मम अस्त्रम् आदत्स्व । यतः ( यस्मादस्त्रात् ) प्रयोक्तुः अरिहिंसा न ( भवति ), विजयः च हस्ते ( भवति ) ।

Hindi Translation :—हे मित्र, मेरा यह सम्मोहन नामक गन्धर्वसम्बन्धी अस्त्र लो । इसके छोड़ने तथा लौटालने के अलग अलग मन्त्र हैं । इससे चलाने वाले को शत्रुहिंसा नहीं लगती और विजय उसके हाथ लगता है ।

English Translation :—O friend, take this weapon of mine, Sammohana by name, having a Gandharva for its preisding deity, and separate *mantras* for shooting and withdrawing it. By this the discharger has victory in his hand without having to kill enemies.

Purport in Sanskrit :—हे मित्र, सम्मे
ास्त्रम् गृहाण । अस्य विक्षेपाय ...

यदलज्जितः कथमस्त्रग्रहणपरः स्यामिति चेत्तत्राह—

अलं ह्रिया मां प्रति यन्मुहूर्तं
　　दयापरोऽभूः प्रहरन्नपि त्वम् ।
तस्मादुपच्छन्दयति प्रयोज्यं
　　मयि त्वया न प्रतिषेधरौक्ष्यम् ॥ ५८ ॥

सञ्जी० । किं च मां प्रति ह्रिया प्रहारनिमित्तयाऽलम् । कुतः । यद्यतो हेतोस्त्वं मां प्रहरन्नपि मुहूर्तं दयापरः कृपालुरभूः तस्मादुपच्छन्दयति प्रार्थयमाने मयि त्वया प्रतिषेधः परिहारः स एव रौक्ष्यं पारुष्यम् तत्र प्रयोज्यं न कर्तव्यम् ।

**Prose Order** :—मां प्रति ह्रिया अलम्, यत् त्वं मां प्रहरन् अपि मुहूर्तं दयापरः अभूः । तस्मात् उपच्छन्दयति मयि त्वया प्रतिषेधरौक्ष्यम् न प्रयोज्यम् ।

**Hindi Translation** :—मुझसे लाज न करो, क्योंकि आपने मुझे मारते समय भी क्षणभर दया दिखलाई। अब मैं आप से विनती कर रहा हूँ, इसलिए इनकार करने की कठिनता मुझपर न दिखलाइए।

**English Translation** .—You should not be ashamed, for even while shooting at me, you felt compassion for a moment; therefore, the harshness of a refusal should not be shown to me who am entreating you.

**Purport in Sanskrit** —[illegible]
[illegible]
[illegible]

तथेत्युपस्पृश्य पयः पवित्रं
सोमोद्भवायाः सरितो नृसोमः ।
उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं
जग्राह तस्मान्निगृहीतशापात् ॥ ५९ ॥

सञ्जी० । ना सोमश्चन्द्र इव नृसोमः उपमितसमासः । 'सोम ओषधिचन्द्रयोः' इति शाश्वतः पुरुषश्रेष्ठ इत्यर्थः । अस्त्रविदस्त्रज्ञः सोऽजस्तथेति सोम उद्भवो यस्याः सा तस्या सोमोद्भवायाः सरितो नर्मदायाः 'रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका' इत्यमरः । पवित्रं पयः उपस्पृश्य पीत्वा आचम्येत्यर्थः । उदङ्मुखः सन्निगृहीत-शापान्निवर्तितशापात् उपकृतादित्यर्थः । तस्मात्प्रियंवदादस्त्रमन्त्रं जग्राह ।

**Prose Order** :—नृसोमः अस्त्रवित् सः तथेति सोमोद्भवायाः सरितः पवित्रं पयः उपस्पृश्य उदङ्मुखः ( सन् ) निगृहीतशा-पात् तस्मात् अस्त्रमन्त्रं जग्राह ।

**Hindi Translation** :—जब उसका शाप छूट गया तब, मनुष्यों में श्रेष्ठ ( चन्द्रमा के तुल्य ), अस्त्रों के जानने वाले अज ने 'अच्छा, कह कर, नर्मदा के पवित्र जल का आचमन करके, उत्तर की ओर मुँह करके, उससे अस्त्रों का मन्त्र ग्रहण किया ।

**English Translation** :—That eminent among men, expert in the use of weapons, said, "Be it so", sipped the holy water of the Narmada, turned his face towards the north, and received the *mantras* of weapon from him whose curse was (now) removed (from him).

Purport in Sanskrit :—अजः नर्मदायाः पवित्रं जलमाचम्य, उत्तरस्यां दिशि मुखं कृत्वा प्रियंवदात् सम्मोहनस्य अस्त्रस्य मन्त्रं शिक्षितवान्।

Change of Voice :—नृसोमेन अस्त्रविदा तेन तथेति सोमोद्भवायाः सरितः पवित्रं पयः उपस्पृश्य उदङ्मुखेन (सता) निगृहीतशापात् तस्मात् अस्त्रमन्त्रः जगृहे।

## Notes.

1. नृसोमः ना (पुरुषः) सोमः (चन्द्रः) इव इति नृसोमः (उपमानोत्तरपदकर्मधारय), moon like man, *i.e.*, eminent among men. It refers to अजः।
2. अस्त्रवित्—अस्त्रं वेत्ति इति अस्त्रवित् अस्त्रज्ञः one conversant with weapons अस्त्र+विद्+क्विप्।
3. तथेति—having said 'Be it so.'
4. सोमोद्भवायाः सरितः—चन्द्रात् उत्पन्नायाः नद्याः अर्थात् नर्मदायाः, of the river born from the moon, *i.e.*, of the Narmada.
5. पवित्रं पयः—पावनं जलम्, sacred water.
6. उपस्पृश्य—आचम्य, having touched.
7. उदङ्मुखः—उत्तराभिमुखः, with his face turned towards the north.
8. निगृहीतशापात् (तस्मात् गन्धर्वात्) —निगृहीतः शापः यस्य तस्मात् (बहु०) from him whose curse was removed from him.
9. तस्मात्—प्रियंवदात्, from Priyamvada.

10. अस्त्रमन्त्रं—अस्त्रस्य मन्त्रम् ( ष० त० ) the *mantra* of the weapon.
11. जग्राह—received, took.

एवं तयोरध्वनि दैवयोगा-
दासेदुषोः सख्यमचिन्त्यहेतु ।
एको ययौ चैत्ररथप्रदेशा-
न्सौराज्यरम्यानपरो विदर्भान् ॥ ६० ॥

सञ्जी० । एवमध्वनि मार्गे दैवयोगाद्दैववशादचिन्त्यहेत्वनिर्धार्यहेतुकं सख्यं सखित्वम् " सख्युर्यः " इति यप्रत्ययः । आसेदुषोः प्राप्तवतोस्तयोर्मध्य एको गन्धर्वश्चैत्ररथस्य कुबेरोद्यानस्य प्रदेशान् ' अस्योद्यानं चैत्ररथम् ' इत्यमरः । अपरोऽजः सौराज्येन राजन्वत्तया रम्यान्विदर्भान्विदर्भदेशान्ययौ ।

**Prose Order** :—एवम् अध्वनि दैवयोगाद् अचिन्त्यहेतु सख्यम् आसेदुषोः तयोः एकः चैत्ररथप्रदेशान् ( ययौ ) . अपरः सौराज्यरम्यान् विदर्भान् ययौ ।

**Hindi Translation** :—इस प्रकार जब इन दोनों में अकस्मात् ऐसी मित्रता हो गई जिसका कारण समझ में नहीं आता था, तब उनमें से एक तो कुबेर के बगीचे की ओर और दूसरा विदर्भनगर को चला गया जो कि उत्तम शासन के कारण रमणीक मालूम पड़ता था ।

**English Translation** :—Thus when the two had created on the way a friendship of which the cause could not be understood, one of them went to the regions of Kubera's garden, while

receive him, even as the sea with its huge waves advances to receive the moon.

Purport in Sanskrit :—अजः विदर्भनगरं प्राप्य तत्समीपे स्थितवान् । तस्मिन् काले यथा चन्द्रे समुदिते सागरः तेन सह मिलितुमिव तुङ्गैः तरङ्गैः उच्चलति , तथैव अजे समागते प्रसन्नचेताः भोजराजः तं सम्भावयितुं प्रत्युज्जगाम ।

Change of Voice :—नगरोपकण्ठे तस्थिवान् सः तदागमारूढगुरुप्रहर्षेण क्रथकैशिकेन्द्रेण प्रवृद्धोर्मिणा ऊर्मिमालिना चन्द्रः इव प्रत्युज्जग्मे ।

## Notes

1. नगरोपकण्ठे—उपकण्ठे means समीपे near ; उपगतः कण्ठम् इति उपकण्ठः ( प्रादिसमासः ) one who is near । नगरस्य उपकण्ठे इति नगरोपकण्ठे ( ष० त० ) , पुरस्य समीपे near the town.

2. तस्थिवांसम्—स्थितम् , him who had halted, स्था + क्वसु द्वितीया एकवचन qualifying तम् ।

3. तदागमारूढगुरुप्रहर्षः—आरूढ means उत्पन्न ; गुरु means great ; प्रहर्ष means मोद, joy.
   (1) गुरुश्चासौ प्रहर्षश्च इति गुरुप्रहर्षः ( कर्मधारय ) ।
   (2) तस्य ( अजस्य ) आगमः ( आगमनम् ) इति तदागमः ( ष० त० ) his arrival.
   (3) तदागमेन आरूढः गुरुप्रहर्षः यस्य सः ( बहु० ) one to whom great joy was born on account of his arrival, i. e , one who felt great glee at Aja's arrival.

4. क्रथकैशिकेन्द्रः—विदर्भराजः the lord of the Kratha-kaishikas, namely Bhoja.
5. प्रवृद्धोर्मिः—प्रवृद्ध means swollen. risen. प्र+वृध्+क ; प्रवृद्धाः ऊर्मयः ( तरङ्गाः ) यस्य सः प्रवृद्धोर्मिः ( बहु० ), he whose waves swelled up.
6. ऊर्मिमाली—ऊर्मीणां ( तरङ्गानां ) माला अस्यास्तीति ऊर्मिमाली , one who possessed masses of waves, *i. e.*, the ocean.
7. चन्द्रम् इव—यथा समुद्रः चन्द्रमसं दृष्ट्वा तेन सह मिलितुं स्वकीयान् तरङ्गान् उत्थापयति तथैव भोजोऽपि अजेन सह मिलितुमग्रे जगाम ।
8. प्रत्युज्जगाम—went ahead.

प्रवेश्य चैनं पुरमग्रयायी
नीचैस्तथोपाचरदर्पितश्रीः ।
मेने यथा तत्र जनः समेतो
वैदर्भमागन्तुमजं गृहेशम् ॥ ६२ ॥

सञ्जी० । एनमजमग्रयायी सेवाधर्मेण पुरो गच्छन्नित्यर्थः । नीचैर्नम्रः पुरं प्रवेश्य प्रवेशं कारयित्वा प्रीत्याऽर्पितश्रीस्तया तेन प्रकारेणोपाचरदुपचरितवान् यथा येन प्रकारेण तत्र पुरे समेतो मिलितो जनो वैदर्भं भोजमागन्तुं प्राघूर्णिकं मेने अजं गृहेशं गृहपतिं मेने ।

Prose Order :—अग्रयायी एनम् पुरं प्रवेश्य अर्पितश्रीः (च) तथा नीचैः उपाचरत् च यथा तत्र समेतः जनः वैदर्भम् आगन्तुम्, अजं गृहेशं मेने ।

**Hindi Translation** :—आगे आगे चलते हुए वह उन्हें नगर में ले गया और उसे अपनी सम्पत्ति देकर इतनी नम्रता से पेश आया कि वहाँ पर जो लोग इकट्ठा थे उन सबों ने विदर्भराज को अतिथि और अज को आतिथेय समझा।

**English Translation** :—Walking in front he escorted him to the city, gave him his wealth and served him with humility in such a way that the people who had assembled there regarded the King of the Vidarbhas to be the guest and Aja to be the host.

**Purport in Sanskrit** :—भोजराजः स्वयं पुरो गत्वा अजं नगराभ्यन्तरमानीय एवं विनीतभावेन सिषेवे यत्तत्र समेता जनाः अजं राजभवनस्य अधीश्वरम् मेनिरे, भोजराजश्चातिथिममन्यन्त।

**Change of Voice** :—अग्रयायिना एष पुरं प्रवेश्य अर्पितश्रिया ( च ) तथा नीचैः उपाचर्यत, यथा तत्र समेतेन जनेन वैदर्भः आगन्तुः अजः गृहेशः मेने।

## Notes

1. अग्रयायी—अग्रे ( पुरः, in front) यातुं शीलमस्य इति अग्रयायी, अग्र+या+णिनि, walking in front.
2. एनम्—अजम्।
3. पुरम्—in the town.
4. प्रवेश्य—having caused him to enter, प्र+विश्+णिच् ल्यप्।

यस्यास्ताम् स्थापितमङ्गलकलशामित्यर्थः। रम्यां रमणीयां नवोपकार्यां नूतनं राजभवनम् 'उपकार्या राजसद्मन्युपचारचितेऽन्यवत्' इति विश्वः। मदनो बाल्यात्परां शैशवादनन्तरां दशामिव यौवनमिवेत्यर्थः। अध्युवासाधिष्ठितवान् तत्रोषितवानित्यर्थः। "उपान्वध्याङ्वसः" इति कर्मत्वम्।

Prose Order :—रघुप्रतिनिधिः सः प्रणतैः तस्य अधिकारपुरुषैः प्रदिष्टाम् प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भाम् रम्यां नवोपकार्यां मदनः बाल्यात् परां दशाम् इव अध्युवास।

Hindi Translation :—उन्हें भोज के पुरुषों ने झुककर एक नया रमणीक शामियाना दिखाया। शामियाने में पूर्व द्वार के पास एक चबूतरे पर जल से भरे कलशे रक्खे हुए थे। उस शामियाने में रघुसदृश अज इस प्रकार घुस गए जैसे बाल्यावस्था के अनन्तर वाली अवस्था में कामदेव प्रवेश करता है।

English Translation :—Just as Cupid occupies the state next to childhood, even so did he, the representative of *Raghu*, occupy the beautiful new pavilion which was pointed out to him by Bhoja's officers bowing down, and in which jars filled with water were placed on a dais near the eastern door.

Purport in Sanskrit :—भोजराजस्य सेवकाः प्रणताः सन्तः अजाय एकं नूतनं रमणीयं राजभवनम् अदर्शयन्। तस्य राजभवनस्य पूर्वद्वारि एका वेदी आसीत्, तस्यां जलपूर्णाः कुम्भाः स्थापिता आसन्। तस्मिन्नेव अजः प्रविवेश।

Change of Voice :—रघुप्रतिनिधिना तेन, प्रणतैः तस्य अधिकारपुरुषैः प्रदिष्टा प्रद्वारवेदिविनिवेशितपूर्णकुम्भा रम्या नवोपकार्या मदनेन बाल्यात् परा दशा इव अध्यूषे।

(3) प्राग्द्वारवेद्यां विनिवेशितः ( स्थापितः ) इति प्राग्द्वारवेदि- विनिवेशितः ( सप्तमी तत्पुरुष ) placed on the dais which was near the eastern door.

(4) प्राग्द्वारवेदिविनिवेशितः पूर्णः कुम्भः ( घटः jar ) यस्याः ताम् (बहु० ), in which jars filled with water were placed at the dais near the eastern door.

11. रम्याम्—रमणीयाम्, delightful, beautiful. रम्+ यत्+टाप् द्वितीया एकवचन qualifying उपकार्याम्—The यत् has been added according to the rule पोरदु- पधाद्यत् ।

12. मदनः—कामदेवः Cupid.

13. बाल्यात्—बाल्यावस्थानन्तरम्, after childhood.

14. परां—अनन्तराम् ।

15. दशाम्—state.

16. मदनः बाल्यात् परां दशाम् इव अध्युवास—यथा बाल्या- नन्तरामवस्थां मदनः प्रविशति तथैव नवं राजभवनम् अजः प्रविवेश, just as Cupid occupies the state after childhood, even so did Aja occupy the pavilion.

तत्र स्वयंवरसमाहृतराजलोकं
कन्याललाम कमनीयमजस्य लिप्सोः ।
भावावबोधकलुषा दयितेव रात्रौ
निद्रा चिरेण नयनाभिमुखी बभूव ॥६४॥

सञ्जी० । तत्रोपकार्यायां स्वयंवरनिमित्तं समाहृतः संमेलितो राजलोको येन तत्कमनीयं स्पृहणीयं कन्याललाम कन्यासु श्रेष्ठम् 'ललामोऽस्त्री ललामापि प्रभावे पुरुषे ध्वजे । श्रेष्ठभूपाशुण्डश्रृङ्ग

पुंश्चिह्नस्वलिङ्गिनु।' इति यादवः। लिप्सोर्लब्धुमिच्छोः। लभेः सन्नन्तादुप्रत्ययः। अजस्य भावावबोधे पुरुषस्याभिप्रायपरिज्ञाने कलुषाऽसमर्था दयितेव रात्रौ निद्रा चिरेण नयनाभिमुखी बभूव। (राजानं कामिनं चोरं प्रविशन्ति प्रजागराः) इति भावः। अभिमुखीशब्दो ङीबन्तस्त्र्यन्तो वा।

**Prose Order** :—तत्र स्वयंवरसमाहृतराजलोकम् कमनीयं कन्याललाम लिप्सोः अजस्य भावावबोधकलुषा दयिता इव रात्रौ निद्रा चिरेण नयनाभिमुखी बभूव।

**Hindi Translation** :—जैसे पतिका अभिप्राय समझने में असमर्थ स्त्री अपने पति के पास बड़ी देर में जाती है, उसी प्रकार उस सुन्दर कन्याश्रेष्ठ को पाने के लिए इच्छुक अज के नेत्रों के सामने रात में निद्रा बड़ी देर में आई जिसने स्वयंवर के निमित्त तमाम राजाओं को इकट्ठा करवा रक्खा था।

**English Translation** :—There, like a loved wife unable to understand the feelings of her husband, sleep came after a long time at night towards the eyes of Aja, desirous to get the handsome gem of a girl, who had caused a host of kings to gather at her Swayamvara.

**Purport in Sanskrit** :—तावत्काले अजस्य हृदयं स्वयंवर-सम्बन्धिन्यां चिन्तायां मग्नं बभूव। 'यां प्राप्तुं नाना भूपाः एकत्रीभूताः तदलौकिकरूपसम्पन्नं कन्यारत्नं प्राप्स्यामि न वा' इति चिन्तयतोऽजस्य रात्रेरधिकतमं व्यपयातम्। यथा नायिका पत्युः प्रयोजनस्य विज्ञाने असमर्था सती रात्रौ विलम्बेन तस्य नेत्राभिमुखी भवति, तथा निद्रापि इन्दुमत्यनुरक्तचित्तस्य अजस्य नयनाभिमुखी विलम्बेनाभवत्।

Change of Voice :—तत्र स्वयंवरसमाहृतराजलोकं कमनीयं कन्याललाम लिप्सोः अजस्य भावावबोधकलुषया दयितया इव रात्रौ निद्रया चिरेण नयनाभिमुख्या बभूवे।

## Notes.

1. स्वयंवरसमाहृतराजलोकम्—(1) राज्ञां लोकः इति राजलोकः ( ष० त० ), a host of kings.
   (2) समाहृत means सम्मेलित, made to assemble. सम्+आ+हृ+क्त।
   (3) स्वयंवरे समाहृतः राजलोकः येन तत् ( बहु० ) qualifying कन्याललाम—that by which a host of kings was caused to assemble.
2. कमनीयम्—कामयितुं योग्यम्, अर्थात् सुन्दरम् desirable, covetable.
3. कन्याललाम—ललामन् means the best ( सर्वोत्कृष्टं ) कन्यासु ललम। इति ( स० त० ), the best among girls, the gem of a girl.
4. लिप्सोः—लब्धुम् इच्छोः, of one desirous of obtaining लभ्+सन्+उ।
5. स्वयंवरसमाहृतराजलोकं कन्याललाम लिप्सोः अजस्य of Aja who was desirous of obtaining that gem of a girl who had caused a host of kings to assemble in the Swayamvara.
6. भावावबोधकलुषा—भाव means अभिप्राय; अवबोध—ज्ञान knowledge अब=बुध+घञ्; कलुषा—असमर्था, unable.
   (1) भावस्य अवबोधः इति भावावबोधः ( ष० त० ) the knowledge of feeling.

(2) भावावबोधे कलुषा (असमर्था) सप्तमी तत्पुरुष unable to know the feeling; unable to understand whether her approach will be welcome to her husband or not.

Some commentators take भाव in the sense of 'love for another lady,' in that case the compound will mean 'offended on account of being aware of her husband's love for another lady.'

7. दयिता इव—स्त्री इव, like a beloved wife.
8. रात्रौ—at night.
9. निद्रा—sleep.
10. चिरेण—after a long time.
11. नयनाभिमुखी बभूव—became in front of his eyes, *i.e.*, came towards his eyes.

तं कर्णभूषणनिपीडितपीवरांसं
　　शय्योत्तरच्छदविमर्दकृशाङ्गरागम् ।
सूतात्मजाः सवयसः प्रथितप्रबोधं
　　प्राबोधयन्नुषसि वाग्भिरुदारवाचः ॥६५॥

तमिति । कर्णभूषणाभ्यां निपीडितौ पीवरौ पीनावंसौ यस्य तम् । शय्याया उत्तरच्छदस्योपर्यास्तरणवस्त्रस्य विमर्देन घर्षणेन कृशो विरलोऽङ्गरागो यस्य तं न त्वन्यकान्तासङ्गादिति भावः । प्रथितप्रबोधं प्रकृष्टज्ञानं तमेनमजं सवयसः समानवयस्का उदारवाचः प्रगल्भगिरः सूतात्मजा बन्दिपुत्राः 'वैतालिकाः' इति वा पाठः 'वैतालिका बोधकराः' इत्यमरः । वाग्भिः स्तुतिपाठैरुषसि प्राबोधयन्बोधयामासुः ।

**Prose Order** :—कर्णभूषणनिपीडितपीवरांसम् शय्योत्तरच्छदविमर्दकृशाङ्गरागम् प्रथितप्रबोधं तम् सवयसः उदारवाचः सूतात्मजाः वाग्भिः उषसि प्रत्यबोधयन् ।

**Hindi Translation** :—प्रातःकाल उसके पुष्ट कन्धों पर उसके कानों के कुण्डल के निशान पड़े थे। पलँग की चद्दर की रगड़ से उसके शरीर का सुगन्धित उबटन कुछ कुछ छूट गया था। ऐसे विख्यात-बुद्धि वाले कुमार को उसकी उम्र के, और बड़ी ही निर्भीक वाणी वाले सूत पुत्रों ने जगाया।

**English Translation** :—At dawn, the bards' sons of equal age (with Aja), and of bold speech, awakened, with their speech, him whose knowledge was renowned, whose aromatic cosmatics had grown dim on account of the rubbings on the bed-sheet, and whose stout shoulders were marked by his ear-ornaments.

**Purport in Sanskrit** :—प्रातःकाले मधुरकण्ठाः युवकाः सूतपुत्राः तीक्ष्णबुद्धिमजं जागरयामासुः। अजस्य स्कन्धौ कर्णकुण्डलसंमर्गात् तद्रेखाभिः अङ्कितावास्ताम्। शय्यायाः प्रच्छदवस्त्रस्य सङ्घर्षेण तस्य कुङ्कुमकस्तूरिकादिकृतः अङ्गरागः किञ्चिद् विमृष्टो बभूव।

**Change of Voice** :—कर्णभूषणनिपीडितपीवरांसः शय्योत्तरच्छदविमर्दकृशाङ्गरागः प्रथितप्रबोधः सः सवयोभिः उदारवाग्भिः सूतात्मजैः वाग्भिः उषसि प्रत्यबोध्यत।

## Notes

1. कर्णभूषणनिपीडितपीवरांसम्—(1) कर्णयोः भूषणम् इति कर्णभूषणम् ( ष० त० ), ear-ornaments *i.e.*, kundala.

3. हे मतिमतां वर—O you, best of talented men.
4. शय्याम् मुञ्च—leave the bed.
5. धात्रा—ब्रह्मणा, by the Creator.
6. जगतः—संसारस्य, of the world.
7. धूः—भारः, burden.
8. द्विधैव—द्वयोः एव भागयोः, into two parts only, not into a third one.
9. विभक्ता ननु—विभज्य स्थापिता खलु, has been verily divided वि+भज्+क्त+टाप् ।
10. ताम्—धुरम्
11. एकतः—एककोटौ, at one extremity.
12. तव गुरुः— तव पिता, your father.
13. विनिद्रः सन्—विगता निद्रा यस्य सः तथोक्तः सन् (बहु०) becoming one whose sleep is gone; *i.e.*, leaving his sleep.
14. बिभर्ति—धारयति, bears, supports.
15. तस्याः— धुरः, of that burden.
16. अपरधुर्यपदावलम्बी—धुरं वहतीति धुर्यः अर्थात् भारवाही carrier, bearer; पद—post, office, duty (पद्दन-स्थानम्), अवलम्बी supporter, अव+लम्ब+णिनि ।

(1) धुर्यस्य पदं (स्थानम्) इति धुर्यपदम् । the office of a bearer, the post of a bearer.

(2) अपरं च तद् धुर्यपदम् इति अपरधुर्यपदम् (कर्मधारय) the other post of a bearer.

(3) अपरधुर्यपदम् अवलम्बते इति अपरधुर्यपदावलम्बी, one who supports the other post of a bearer, you are the supporter of the other end of the burden.

निद्रावशेन भवताऽप्यनवेक्षमाणा
　　पर्युत्सुकत्वमबला निशि खण्डितेव ।
लक्ष्मीर्विनोदयति येन दिगन्तलम्बी
　　सोऽपि त्वदाननरुचिं विजहाति चन्द्रः ॥ ६७ ॥

सञ्जी० । चन्द्रारविन्दराजवदनादयो लक्ष्मीनिवासस्थानानीति प्रसिद्धिमाश्रित्योच्यते । निद्रावशेन निद्राधीनेन स्यन्तरासङ्गोऽत्र व्यज्यते । भवता पर्युत्सुकत्वमपि त्वय्यनुरक्तत्वमपीत्यर्थः । "प्रसितोत्सुकाभ्यां तृतीया च" इति सप्तम्यर्थे तृतीया । अपिशब्दस्तद्विषयानुरागस्यानपेक्ष्यत्वद्योतनार्थः । निशि खण्डिता भर्तुरन्यासङ्गज्ञानकलुषिताऽबलेव नायिकेव (ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता) इति दशरूपके । अनवेक्षमाणाऽविचारयन्ती सती उपेक्षमाणेत्यर्थः । 'अनवेक्ष्यमाणा' इति पाठे निद्रावशेन भवताऽनवेक्ष्यमाणाऽनिरीक्ष्यमाणा कर्मणि शानच् । लक्ष्मीः प्रयोजककर्त्री येन प्रयोज्येन चन्द्रेण पर्युत्सुकत्वं त्वद्विरहवेदनाम् (कालाक्षमत्वमौत्सुक्यं मनस्तापत्वरादिकृत्) इत्यलंकारे । विनोदयति निरासयतीति योजना । शेषं पूर्ववत् । नायस्त्वयोपपत्तिनपश्यन्निमं पक्षमुपैतीत्यु लक्ष्मीर्येन चन्द्रेण सह त्वदाननसदृशत्वादिति भावः । विनोदयति विनोदं करोति । विनोदशब्दात् "तत्करोति तदाचष्टे" इति णिच्प्रत्ययः । सादृश्यदर्शनादयो हि विरहिणां विनोदस्थानानीति भावः । स चन्द्रोऽपि दिगन्तलम्बी पश्चिमाशां गतः सन् अस्तं गच्छन्नित्यर्थः । अत एव त्वदाननरुचिं विजहाति त्वन्मुखसादृश्यं त्यजतीत्यर्थः । अतो निद्रां विहाय तां लक्ष्मीमनन्यशरणां परिगृहाणेति भावः ।

Prose Order :—निद्रावशेन भवता पर्युत्सुकत्वम् अपि अनवेक्षमाणा निशि खण्डिता अबला इव लक्ष्मीः येन विनोदयति, स चन्द्रः अपि दिगन्तलम्बी (सन्) त्वदाननरुचिं विजहाति ।

**Hindi Translation :**—आप जिस समय निद्रा के वशीभूत थे उस समय लक्ष्मी आप के लिए अत्यन्त ही उत्कण्ठित थी। उसने अपनी वह उत्कण्ठा भी छोड़ दी और क्रुद्ध मानिनी स्त्री के समान रात को चन्द्रमा के साथ अपना मन बहलाने लगी। लेकिन वह चन्द्रमा भी पश्चिम दिशा के कोने में लटका हुआ तुम्हारे मुख की शोभा को त्याग रहा है।

**English Translation :**—Even the moon, with whom Lakshmi was diverting herself at night and like a woman offended by her husband, has disregarded her longing for you who are under the control of sleep, now hanging in the extremity of the western direction, is leaving the beauty of your face.

**Purport in Sanskrit :**—रात्रौ त्वां निद्रारूपायामन्यस्यां नायिकायामासक्तमवलोक्य तव चिरप्रेयसी लक्ष्मीः मानवती जाता, अतः त्वदर्थं यदौत्कण्ठ्यं सा दधार तदपि सा उपेक्षाञ्चक्रे, अथ च कथञ्चित्स्वमनोविनोदार्थं त्वदाननसदृशं चन्द्रमसमाश्रयते। सः चन्द्रोऽप्यधुना अस्ताचलशिखरावलम्बी भूत्वा क्षीणकान्तिः सन् त्वदाननसमतां त्यजति। अतोऽधुना त्वदाननसादृश्यरूपस्य विनोदस्थानस्याभावात् सा अशरणा जाता। अतो निद्रां त्यक्त्वा तां लक्ष्मीं गृहाण।

**Change of Voice :**—निद्रावशेन भवता पर्युत्सुकत्वम् अपि अनवेक्षमाणया खण्डितया इव निशि लक्ष्म्या येन धिनोय्यते, तेन चन्द्रेण अपि दिगन्तलम्बिना ( सता ) त्वदाननरुचिः विहीयते।

## Notes.

1. निद्रावशेन भवता पर्युत्सुकत्वम्—this is equivalent to निद्रावशे भवति अनुरक्तत्वम्, *i.e.*, longing for you who are under the influence of sleep ; attachment in you who are under the influence of sleep. The तृतीया should be explained by 'प्रसितोत्सुकाभ्यां तृतीया च' इति सप्तम्यर्थे तृतीया।
2. निद्रावशेन—निद्रायाः वशः तेन ( ष० त० ), one who is under the control of sleep.
3. पर्युत्सुकत्वम् –अनुरक्तत्वम्, devotion, attachment, longing
4. अनवेक्षमाणा—न अवेक्षमाणा (विचारयन्ती ) इति अनवेक्षमाणा अर्थात् अविचारयन्ती, disregarding, not at all caring for, नञ्+अव+ईक्ष्+शानच्+टाप् qualifying लक्ष्मीः।
5. पर्युत्सुकत्वम् अपि अनवेक्षमाणा—disregarding even her longing ; leaving even her devotion (for you).
6. निद्रावशेन भवता पर्युत्सुकत्वम् अपि अनवेक्षमाणा लक्ष्मीः—the goddess of wealth, leaving even her longing for you who are under the influence of sleep.
7. निशि—रात्रौ, at night.
8. खण्डिता—भर्तुरन्यासङ्गज्ञानकलुषिता, offended by the knowledge of her husband's connection with another woman.
9. अबला इव—like a lady.

10. येन विनोदयति—येन चन्द्रेण सह विनोदयति with whom diverts herself ; with whom she amuses herself.

11. सः चन्द्रः अपि—Even that moon. The अपि here indicates profoundness of Lakshmi's miserable condition. She is *so miserable that* the *one* object in which she had consolation—that too has been lost to her.

12. दिगन्तलम्बी—दिशः अन्तः दिगन्तः ( ष० त० ) दिगन्ते लम्बः अस्यास्ति इति दिगन्तलम्बी, तथोक्तः सन्, अर्थात् पश्चिमाशां गतः सन्, अस्तं गच्छन् resorting to the end of direction, *i.e.*, resorting to the western direction—setting.

13. त्वदाननरुचिं—तव आननम् इति त्वदाननम् ( ष० त० ), your face ; त्वदाननस्य रुचिम् इति त्वदाननरुचिम् ( ष० त० ), the beauty of your face.

14. विजहाति—leaves.

15. त्वदाननरुचिं विजहाति—leaves the beauty of your face, *i.e.*, is no more visible, since it is getting sunrise.

अपि in पर्युत्सुकत्वमपि shows that it is very difficult for a wife to give up her longing for her husband.

The favourite haunts of Lakshmi are three, *viz.*, the lotus, the moon and the face of princes and princesses. Of these three the last is most favourite. Lakshmi is supposed to be the wife

of Aja. As such she approaches him, but seeing him fast asleep, she gets offended, because she thinks that sleep is a woman with whom Aja is enjoying. At this she gives up her longing. She becomes uneasy and finds no rest ; she becomes anxious as to how to divert herself. At last she finds that the moon approaches Aja's face in beauty most nearly. But now as the sun is rising, the moon will be disappearing leaving Lakshmi in a very sad condition. Therefore, on behalf of Lakshmi the bards are earnestly entreating Aja to wake up and welcome Lakshmi.

तद्वल्गुना युगपदुन्मिषितेन ताव-
त्सद्यः परस्परतुलामधिरोहतां द्वे ।
प्रस्पन्दमानपरुषेतरतारमन्त-
श्चक्षुस्तव प्रचलितभ्रमरं च पद्मम् ॥६८॥

सञ्जी० । तत्तस्माल्लक्ष्मीपरिग्रहणाद्वल्गुना मनोज्ञेन 'वल्गु स्थाने मनोज्ञे च वल्गु भाषितमन्यवत्' इति विश्वः । युगपत्तावदुन्मिषितेन युगपद्वेोन्मीलितेन सद्यो द्वे अपि परस्परतुलामन्योन्यसादृश्यमधिरोहतां प्राप्नुताम् प्रार्थनायां लोट् । के द्वे अंतःप्रस्पन्दमाना चलन्ती परुषेतरा स्निग्धा तारा कनीनिका यस्य यथोक्तम् 'तारकाक्ष्णः कनीनिका' इत्यमरः । तव चक्षुः अंतःप्रचलितभ्रमरं चलद्भृङ्गं पद्मं च । युगपदुन्मेषे सति संपूर्णसादृश्यलाभ इति भावः ।

Prose Order :—अन्तःप्रस्पन्दमानपरुषेतरतारं तव चक्षुः,

अंशुभिः ( किरणैः ) भिन्नानि ( विकसितानि ) तैः those that have opened up on account of the sun's rays.

13. सरसिजैः —कमलैः, with lotuses.
14. भान्वंशुभिन्नैः सरसिजैः—with the lotuses that have bloomed up with the sun's rays.
15. संगच्छते—सङ्गच्छते, meets with.

ताम्रोदरेषु पतितं तरुपल्लवेषु
निर्धौतहारगुलिकाविशदं हिमाम्भः ।
आभाति लब्धपरभागतयाऽधरोष्ठे
लीलास्मितं सदशनार्चिरिव त्वदीयम् ॥७०॥

सञ्जी० । ताम्रोदरेष्वरुणाभ्यन्तरेषु तरुपल्लवेषु पतितं निर्धौता या हारगुलिका मुक्तामणयस्तद्वद्विशदं हिमाम्भो लब्धपरभागतया लब्धोत्कर्षतया ' परभागो गुणोत्कर्षे ' इति यादवः । अधरोष्ठे त्वदीयं सदशनार्चि दन्तकान्तिसहितं लीलास्मितमिवाभाति शोभते ।

**Prose Order** :—ताम्रोदरेषु तरुपल्लवेषु पतितं निर्धौतहारगुलिकाविशदं हिमाम्भः लब्धपरभागतया अधरोष्ठे त्वदीयं सदशनार्चिः लीलास्मितम् इव आभाति ।

**Hindi Translation** :— जिनका मध्यभाग लाल लाल है ऐसे वृक्षों की पत्तियों पर पड़ी हुई, हार के परिमार्जित मोतियों के समान उज्ज्वल, ओस की बूँदें, अपनी उत्तम स्थिति के कारण, आपके ओठों पर पड़ी हुई तथा आपके दाँतों की प्रभा से चमकती हुई आपकी मुसकराहट के समान मालूम पड़ रही हैं ।

4. तेषु निगमिताः—बद्धाः, fastened, tied.
5. वनायुदेश्याः—Vanayu is a country वनायुदेशे भवाः इति वनायुदेश्याः घोटकाः पारसीकाः, born in Vanayu.
6. अमी—एते, these.
7. वाहाः—अश्वाः horses.
8. निद्रां विहाय—have given up sleep. वि+हा+ल्यप्।
9. पुरोगतानि—अग्रे स्थापितानि, placed in front.
10. लेह्यानि—आस्वाद्यानि, tasteful, fit to be licked.
11. सैन्धवशिलाशकलानि—सिन्धुषु भवः सैन्धवः ( सेंधा नमक, salt ) तस्य शिलाः, तासां शकलानि ( खण्डानि ), pieces of rocks of salt.
12. मलिनयन्ति—मलिनानि कुर्वन्ति, are making dirty. That is it is morning, and your horses too are licking the pieces of rocks. Horses lick salt in the morning.

भवति विरलभक्तिर्म्लानपुष्पोपहारः
स्वकिरणपरिवेषोद्भेदशून्याः प्रदीपाः ।
अयमपि च गिरं नस्त्वत्प्रबोधप्रयुक्ता-
मनुवदति शुकस्ते मञ्जुवाक्पञ्जरस्थः ॥ ७४ ॥

सञ्जी० । म्लानः पुष्पोपहारः पुष्पपूजा म्लानत्वादेव विरलभक्ति-र्विरलरचनो भवति । प्रदीपाश्च स्वकिरणानां परिवेषस्य मण्डल-स्योद्भेदेन स्फुरणेन शून्या भवन्ति निस्तेजस्का भवन्तीत्यर्थः । अपि चायं मञ्जुवाङ् मधुरवचनः पञ्जरस्थस्ते तव शुकस्त्वत्प्रबोधनिमित्ते [illegible] ताां नोऽस्माकं गिरं वाणीमनुवदति अनुकृत्य वदती-[illegible] प्रभातलिङ्गानि वर्तन्ते अतः प्रबोद्धव्यमिति भावः ।

**Prose Order** :—म्लानपुष्पोपहारः विरलभक्तिः भवति । प्रदीपाः स्वकिरणपरिवेषोद्भेदशून्याः ( भवन्ति ) । अपि च अयं मञ्जुवाक् पञ्जरस्थः ते शुकः त्वत्प्रबोधप्रयुक्तां नः गिरम् अनुवदति ।

**Hindi Translation** :—उपहार में आये हुये फूल कुम्हला गए हैं इसलिए वे शिथिल पड़ गए हैं। दीपकों में ( भी ) अब प्रकाशमण्डल स्फुरित नहीं हो रहा है। यह मधुर वाणी वाला पिंजड़े में बैठा हुआ आप का तोता हम लोगों के उन शब्दों की नकल कर रहा है जो कि हम लोग आप के जगाने के लिये प्रयुक्त कर रहे हैं।

**English Translation** :—The withered offering of flowers has become loose in texture ; the lamps are void of the tremulous circles of their light ; and this your sweet-speaking parrot sitting in its cage imitates the words that we employ to awaken you.

**Purport in Sanskrit** :—उपहारत्वेन आनीताः कुसुममालाः विशीर्णाः सत्यः विरलरचनाः भवन्ति। प्रदीपाश्च न पूर्ववत्प्रकाशं कुर्वन्ति । कलकण्ठः पञ्जरगतोऽयं ते शुकोऽपि जागरितः सन् अस्मदुक्तानि वचनानि अनुकृत्य उदीरयति ।

**Change of Voice** :—म्लानपुष्पोपहारेण विरलभक्तिना भूयते प्रदीपैः स्वकिरणपरिवेषोद्भेदशून्यैः ( भूयते ) । मञ्जुवाचा पञ्जरस्थेन अनेन ते शुकेन अपि त्वत्प्रबोधप्रयुक्ता गीः अनूद्यते ।

## Notes.

1. म्लानपुष्पोपहारः —म्लान means faded ( कुम्हलाये हुए ). म्लै+क्त : पुष्पाणाम् उपहारः ( ष० त० ) ... of

flowers. म्लानानां पुष्पाणाम् उपहारः, presents of faded flowers *i. e.*, the flowers offered to Aja as presents have faded.

2. विरलभक्तिः —भक्तिः means विरचना, arrangement भज्+क्तिन्; विरला भक्तिः यस्य सः ( बहु० ), whose arrangement has become loose.
3. प्रदीपाः —lamps.
4. स्वकिरणपरिवेषोद्भेदशून्याः —स्वस्य किरणाः इति स्वकिरणाः ( ष० त० ); तेषां परिवेषस्य ( मण्डलस्य ) उद्भेदेन ( स्फुरणेन ) शून्याः devoid of the circle of their rays.
5. मञ्जुवाक्—मञ्जुः वाक् यस्य सः ( बहु० ), whose speech is sweet, sweet-speaking.
6. पञ्जरस्थः —पञ्जरे तिष्ठतीति पञ्जरस्थः ( उपपदतत्पुरुष ), sitting in the cage, पञ्जर+स्था+क।
7. ते शुकः —your parrot.
8. त्वत्प्रबोधप्रयुक्ताम्—तव प्रबोधः ( जागरणं ) इति त्वत्प्रबोधः ( ष० त० ) your waking; तस्मिन् प्रयुक्ताम् ( उच्चारिताम् ) सप्तमी तत्पुरुष—uttered in waking you.
9. नः—अस्माकम् our.
10. गिरम्—वाणीम् speech.
11. अनुवदति—अनुकरोति, imitates.

इति विरचितवाग्भिर्वन्दिपुत्रैः कुमारः
सपदि विगतनिद्रस्तल्पमुज्झाञ्चकार ।
मदपटुनिनदद्भिर्बोधितो राजहंसैः
सुरगज इव गाङ्गं सैकतं सुप्रतीकः ॥ ७५ ॥

सञ्जी० । इतीत्थं विरचितवाग्भिर्वन्दिपुत्रैर्वैतालिकैः पुत्रग्रहणं समानवयस्कत्वद्योतनार्थम् सपदि विगतनिद्रः कुमारः तल्पं शय्याम् 'तल्पं शय्याट्टदारेषु' इत्यमरः । उज्झाञ्चकार विससर्ज । "इजादेश्च गुरुमतोऽनृच्छः" इत्याम्प्रत्ययः । कथमिव मदेन पटु मधुरं निनदद्भिः राजहंसैर्बोधितः सुप्रतीकाख्यः सुरगज ईशानदिग्गजः गङ्गाया इदं गाङ्गं सैकतं पुलिनमिव । 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्' इत्यमरः । "सिकताशर्कराभ्यां च" इत्यणप्रत्ययः । सुप्रतीकग्रहणं प्रायशः कैलासवासिनस्तस्य नित्यं गङ्गातटविहारसंभवादित्यनुसंधेयम् ।

Prose Order :—इति विरचितवाग्भिः वन्दिपुत्रैः सपदि विगतनिद्रः कुमारः मदपटुनिनदद्भिः राजहंसैः बोधितः सुप्रतीकः सुरगजः गाङ्गं सैकतम् इव तल्पम् उज्झाञ्चकार ।

Hindi Translation :—वन्दीजनों के बालकों के ऐसे वचन सुनकर कुमार अज की नींद खुल गई । उसने अपने पलँग को इस तरह तत्काल ही त्याग दिया जिस तरह उन्मत राजहंसों के मधुर शब्द सुनकर जागा हुआ सुप्रतीक नामक सुरगज गङ्गा के रेतीले तट को छोड़ देता है ।

English Translation :—The prince whose sleep had been dispelled by the bards' sons singing in this way, at once left his bed even as "

divine elephant Supratika, roused from sleep by the royal swans cackling sweetly in excitement, leaves the sandy beach of the Ganges.

Purport in Sanskrit :—यथा हि सुप्रतीको नाम देवगजः प्रातःकाले राजहंसानां शब्दं श्रुत्वा निद्रां विहाय मन्दाकिनी-पुलिनशयनाद् उत्तिष्ठति तथा रघुपुत्रोऽपि सूतपुत्राणां स्तुति-मङ्गलैः जागरितः सन् तत्कालमेव शयनादुदतिष्ठत् ।

Change of Voice :—इति विरचितवाग्भिः वन्दिपुत्रैः सपदि विगतनिद्रेण कुमारेण मदपटुनिनदद्भिः राजहंसैः बोधितेन सुप्रतीकेन सुरगजेन इव तल्पम् उज्झाञ्चक्रे ।

## Notes

1. इति—इत्थम्, in this way.
2. विरचितवाग्भिः—विरचिताः वाचः यैः ते विरचितवाचः तैः विरचितवाग्भिः ( बहु० ) by those who have prepared speeches.
3. वन्दिपुत्रैः —वन्दिनां ( सूतानां ) पुत्रैः ( सुतैः ) by the sons of bards.
4. सपदि— शीघ्रम्. at once.
5. विगतनिद्रः—विगता निद्रा यस्य सः तथोक्तः ( बहु० ), becoming one whose sleep is gone, *i. e.*, leaving his sleep.
6. कुमारः—अजः ।
7. तल्पम्—शय्याम्, bed
8. उज्झाञ्चकार—तत्याज, left.
9. मदपटु—मदेन (on account of excitement ) पटु (मधुरं) [illegible] यथा स्यात्तथा, sweetly on account of

excitement. It is an adverb modifying निनद्भिः ।

10. निनद्भिः—cackling. नि+नद्+शतृ तृतीया बहुवचन qualifying राजहंसैः ।

11. मदपटु निनद्भिः—cackling sweetly on account of their excitement.

12. राजहंसैः— by the royal swans.

13. बोधितः—जागरितः, awakened.

14. सुप्रतीकः—this is a proper noun. name of the divine elephant. This elephants dwells in the eastern quarter.

15. गाङ्गम्—गङ्गायाः इदम् इति गाङ्गम्, pertaining to the Ganges, of the Ganges.

16 सैकतम्—पुलिनम्, beach Supratika elephant sports at the banks of the Ganges, and lives there. When the royal swans cackle. then he wakes up.

अथ विधिमवसाय्य शास्त्रदृष्टं
　　दिवसमुखोचितमञ्चिताक्षिपक्ष्मा
कुशलविरचितानुकूलवेषः
　　क्षितिपसमाजमगात् स्वयंवरस्थम् ॥७६ ।

मल्लि० । अथ प्रस्थानानन्तरमञ्चितानि पूजितानि अक्षिपक्ष्माणि यस्य सोऽजः शास्त्रे दृष्टमवगतं दिवसमुखोचितं प्रातःकालोचितं विधिमनुष्ठानमवसाय्य समाप्य स्वयंवरस्थम् । प्रसाधनदक्षैर्विरचितोऽनुकूलः स्वदेहोचितो वेषो नेपथ्यं

## उपजाति

उपजाति contains the characteristics of इन्द्रवज्रा in some पाद, while it has those of उपेन्द्रवज्रा in others. There is no limitation at all as to how many and which पादs ought to be of उपेन्द्रवज्रा and how many and which of इन्द्रवज्रा।

| जगण | | | तगण | | | जगण | | | गु | गु |
|---|---|---|---|---|---|---|---|---|---|---|
| ⏑ | — | ⏑ | — | — | ⏑ | ⏑ | — | ⏑ | — | — |
| त | म | श्व | रे | वि | श्व | जि | ति | त्वि | ती | शं |

( This पाद is that of उपेन्द्रवज्रा )

| तगण | | | तगण | | | जगण | | | गु | गु |
|---|---|---|---|---|---|---|---|---|---|---|
| — | — | ⏑ | — | — | ⏑ | ⏑ | — | ⏑ | — | — |
| निः | शे | ष | वि | श्रा | णि | त | को | ष | जा | तम् |

( This पाद is that of इन्द्रवज्रा )

| तगण | | | तगण | | | जगण | | | गु | गु |
|---|---|---|---|---|---|---|---|---|---|---|
| ⏑ | — | ⏑ | — | — | ⏑ | ⏑ | — | ⏑ | — | — |
| उ | पा | त्त | वि | द्यो | गु | रु | द | क्षि | णा | र्थी |

( This पाद is again that of उपेन्द्रवज्रा )

| तगण | | | तगण | | | जगण | | | गु | गु |
|---|---|---|---|---|---|---|---|---|---|---|
| — | — | ⏑ | — | — | ⏑ | ⏑ | — | ⏑ | — | — |
| कौ | त्सः | प्र | पे | दे | व | र | त | न्तु | शि | ष्यः |

( This पाद is again that of इन्द्रवज्रा )

Thus this verse contains 3 पाद s (first, third and fourth) of उपेन्द्रवज्रा and one (*i. e.*, the second) of इन्द्रवज्रा। There is no order of combination; any पाद

may be that of उपेन्द्रवज्रा or इन्द्रवज्रा । At any rate, there ought to be a combination of the two metres, viz., उपेन्द्रवज्रा and इन्द्रवज्रा ।

## The metre of the concluding Verse.

The concluding verse of Canto V is composed in the पुष्पिताग्रा metre which is defined as अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा, *i.e.*, the odd feet (first and third feet) consist of नगण नगण रगण यगण, while the even feet (second and fourth feet) consists of नगण जगण जगण रगण गुरु, *e. g.*

| नगण | नगण | रगण | यगण | |
|---|---|---|---|---|
| ⏑ ⏑ ⏑ | ⏑ ⏑ ⏑ | — ⏑ — | ⏑ — — | |
| अ थ वि | धि म व | सा य्य शा | स्त्र दृ ष्टं | |
| नगण | जगण | जगण | रगण | गुरु |
| ⏑ ⏑ ⏑ | ⏑ — ⏑ | ⏑ — ⏑ | — ⏑ — | |
| दि व स | मु खो चि | त म ञ्चि | ता क्षि प | क्ष्मा |
| नगण | नगण | रगण | यगण | |
| ⏑ ⏑ ⏑ | ⏑ ⏑ ⏑ | — ⏑ — | ⏑ — ⏑ | |
| कु श ल | वि र चि | ता नु कू | ल वे षः | |
| नगण | जगण | जगण | रगण | गुरु |
| ⏑ ⏑ ⏑ | ⏑ — ⏑ | ⏑ — ⏑ | — ⏑ — | — |
| क्षि ति प | स मा ज | म गा त्स्व | यं व र | स्थ म् |